

संस्कृतप्रतिभा पञ्चम उन्मेषः द्वितीयो विलासः
१९६५
साहित्य-अकादेमी, नवदेहली

विषयानुक्रमणिका—



खण्डकाव्यानि—



गद्यबन्धौ—



रूपके—



अनुवादाः—

२३. श्रीकबीर-अनुवादः—च. रा. तम्बे
२४. मधुगाथा—वे. राघवः
२५. सम्मोदवीचिः—हरिहर त्रिवेदी
२६. स्वर्णपुष्पाणि— ,, ,,
२७. अन्धकुमारः—एल्. जे. खरे
२८. 'तस्या वीरपती रणाङ्गणहतो नीतो यदा मन्दिरम्'—एल्. जे. खरे
२९. मञ्जरीः प्रति—एल्. जे. खरे

**निकषोपलः (पुस्तकविमर्शः)—**

वेदलावण्यम् (भागद्वयात्मकम्), गायत्रीमन्त्राक्षराणामृषिच्छन्दआदयः, वेदभाष्यकारों का आलोचनात्मक अध्ययन, ऋग्वेद के ऋषि और उनका दर्शन और सन्देश, सूर्यदैवज्ञपण्डितविरचितं वेदमन्त्रादीनां भाष्यम्, रावणभाष्यम्, (एतत्सर्वं—डा० सुधीरकुमारगुप्तः); सुगलार्थमाला (नारायणद्विजवरः); विमर्शामृतम् (श्रीपूर्णानन्दस्वामिभारती); श्रीमन्मरुच्छास्त्रसारसङ्ग्रहः, सद्भक्तिदर्पणं च (वी. रघुनाथाचार्य); परतत्त्वदिग्दर्शनपरीक्षा (श्री अण्णङ्गराचार्यः); १३-संस्कृतस्तोत्रग्रन्थाः (श्री. पि. कृष्णमूर्तिः); संस्कृताध्यापनम् (श्री. के. रामवर्मराजः); गीतजवाहरम् (रामकिशोरमिश्रः); शान्तिदूतस्मरणिका (प्रबोधकुमारः); भारतवैजयन्ती यात्रा च (ए. वि. कृष्णवारियर्); केनोपनिषद् (डा० सीतानाथगोस्वामी); महालक्ष्मीस्तुतिमाला (सि. मुत्तुकुमारसामिमुदलियार्); श्रीसुन्दरविनायकनित्योत्सवपद्धतिः, देवतापञ्चकस्तुतिश्च (श्रीसुन्दरेशशर्मा); श्रीशास्तुः सुप्रभातम्, श्रीहरिहरपुत्राक्षरमाला (श्रीस्वामिशास्त्री); उदाहरणानि (श्रीभाष्यं विजयसारथिः); सारस्वतशतकं सटीकम् (श्रीश्रीजीवन्न्यायतीर्थः); कवितोदयचन्द्रिका (डा० गि. वे. सीतापतिः); कृष्णाभ्युदयं नाम प्रेक्षणकम् (श्रीलोकनाथभट्टः); श्रीरामराज्यं जननायकम् (वि. यस्. रङ्गनाथाचार्यः); आपाशास्त्रिसाहित्यसमीक्षा (अशोकः अकलूजकरः); मलमासनिर्णयः सटिप्पणः (श्री दरभारी झा); विचारत्रयी (श्रीसोमसुन्दरदीक्षितः); सूत्रार्थः (पि. एस्. सुब्बरामभट्टः); सुसंहतभारतम् (पुल्लेल रामचन्द्रुडु); मुकुन्दकोषः—लिङ्गानुशासनवर्गः (मुकुन्दशर्मा); सन्ध्या ('जि'—श्रीकृष्णशर्मा च); कृदन्तरूपमाला (मद्रास् संस्कृतविद्यासमितिः); श्रुतिश्रुतिवाहिनी (राधाकृष्णमुदलियार्); सांमनस्यम् (बृहद्गुजरातसंस्कृतपरिषद्) देवभाषा (नारायण कृष्ण सेनगुप्तः); कण्टकाञ्जलिः (के. यम्. अर्जुनवाडकरः).

**लेखकपरिचयः**

**'संस्कृतप्रतिभा'—सम्पादकः (तुरीयावरणपृष्ठे)**

## सम्पादकीयम् —

बहुभाषाविदामाचार्य-विनोबा भावे-महाशयायानामस्ति संस्कृते न केवलमनुरागः, किन्तु समीचीनं ज्ञानमपि । वर्तमाने संवत्सरे, पूर्व्येषु मासेषु, यदा राष्ट्रभाषाप्रश्नप्रयुक्तो झञ्झावातः दक्षिणभारते विततनानाविधनाशकरं प्रक्षोभमुदपादयत्, तदानीं खिन्नमानसैरेतैः भारतीयभाषासमस्यायां स्वपाण्डित्येन आचारेण निष्पक्षपातितया च समाधानं दातुं पूर्णमधिकारं बिभ्रद्भिः पत्रिकासु शुभोदर्कसदाशयपूर्णः सन्देश एष प्रकाशितः, यस्य संस्कृतानुवादमधोदत्तं पठित्वा संस्कृतानुशीलिनशीलाः अन्ये विद्यावन्तो नेतृमुख्याश्च नूनमभिनन्दिष्यन्ति, भाषाकोलाहलशान्तिमार्गं चास्मिन्ननपायं द्रक्ष्यन्ति—

"यदाहं पाठशालायामपठं, तदा आङ्ग्लभाषाद्वारा शिक्षणं प्रावर्तत । तच्च कृत्रिममासीत् । प्रत्युत अप्यस्ति कापि भाषा, या सहस्रवर्षप्राचीना, यस्याः पदानि साक्षात्स्वार्थेष्वेवाद्यापि व्यवह्रियन्ते ? तथा हि पश्यत ऋग्वेदस्य प्रथमं मन्त्रम् —"अग्निमीळे पुरोहितं, यज्ञस्य देवमृत्विजं, होतारं रत्नधातमम्" इति । अत्रत्यानि अग्निः, पुरोहितः, यज्ञः, देवः, रत्नमिति पदानि स्वार्थेष्वेवाद्यापि आधुनिकभारतीयभाषासु प्रयुज्यन्ते । सहस्रशः संस्कृतपदानि, अग्नि-वायु-पवन-पृथ्वी-चन्द्र-सूर्य-बुद्धि-अहङ्कारप्रभृतीनि यथापूर्वमनुस्यूततया उपयुज्यन्ते । गीतायां महाभारते च यानि पदानि तेषु बहूनि व्यवहारे संप्रत्यपि सन्तीति विस्मयावहमिदम् । कस्य भाषान्तरस्य एतादृशी प्राचीना, परम्परागता शब्दसंपदस्तीति वक्तुं शक्यम् ?

अस्त्येवंगुणा भारते भाषा, या अधुनातनी यद्यपि पुराणी । यथा ग्रेक्-भाषा लातिन्-भाषा वा तथा न मृतभाषा संस्कृतभाषा भवति, किन्तु जीवन्ती भाषा । केषुचन विषयेषु अद्यतनभाषापेक्षया जीववत्तरं संस्कृतम् ; नूतनवैज्ञानिकपारिभाषिकशब्दोपकल्पने, या वा का वा आधुनिकभाषा भवतु, तस्याः संस्कृतोपयोगोऽनिवार्यः । संस्कृतस्याङ्ग्लवाण्यामनुवादो दुष्करः । * *

केरलीयशङ्कराचार्यस्य, द्राविडरामानुजाचार्यस्य, कार्णाटमध्वाचार्यस्य, तैलङ्गवल्लभाचार्यस्य प्रातिस्विकभाषा भिन्नाः, किन्तु तेषामभिप्रायाः निखिलेऽपि

भारते प्रसृताः। कथम्? तदानींतनीं भाषां संस्कृतं ते सहायतया जगृहुः। तत एव तेषां ग्रन्था यथा दक्षिणापथे तथा उत्तरापथे च सुतरां पठ्यन्ते। * * स्वीयाशयानां संस्कृतमेव प्रकाशकं चक्रुस्ते, संस्कृतं च तदानीं राष्ट्रभाषा बभूव। यद्यपि संस्कृतं न सामान्यजनताया भाषा बभूव, तथापि संस्कृतिद्वारा ये जनानां परस्परं संबन्धाः समन्वयाश्च बभूवुः, ते संस्कृतद्वारा बभूवुः। तत एव ते संस्कृतं स्वीचक्रुः।

बहवः पृच्छन्ति मां 'किमर्थमद्य संस्कृतं न राष्ट्रभाषीक्रियते' इति। तेभ्यो ममोर्जितमुत्तरम् 'बाढं, कर्तव्यम्' इति। * * संस्कृतं तु लघूकरिष्यते; यतस्तस्याः सुबन्ततिङन्तव्यवस्था जटिलाः। संस्कृतस्यायं प्रधानो गुणः, यत् सा मूलभूता भाषा। सा च बहुधा मूलभाषा, यतस्तस्या मूलभूतादेकस्मात्पदाद् बहूनि पदानि निष्पादयितुं निरूपयितुं च शक्यन्ते। * * "

* * *

विद्यामन्त्रिविभागस्य व्ययप्रक्रियायाः लोकसभायामभ्युपगमं प्रार्थयमानेन विद्यामन्त्रिणा छाग्लामहाशयेन सदस्यप्रश्नोत्तरप्रसङ्गे उक्तम्—'संस्कृत-बहिष्कारो नाभिप्रेतः। सर्वभाषाणां मूलभाषा हि सा' इति। आह च सः 'चतुर्थयोजनायां संस्कृतविद्यार्थं २४५-लक्षपरिमितं धनं व्ययीकरिष्यते' इति।

ज्ञायते च प्रधानमन्त्रिभिः श्री ला. ब. शास्त्रिमहोदयैः संस्कृताभि-वृद्ध्यर्थं यथोचितं किमपि कर्तव्यम्' इति निर्देशः कृत इति। तदनुसारं च मन्त्रिविभागेषु कार्यपर्यवेक्षकैः संभूय 'पाठशालासु मातृभाषया सह "संयुक्तप्रक्रियासंविधान (composite course) मर्यादया भाषात्रयसंविधाने (Three language formula) संस्कृतमपि क्रोडीकरणीयम्' इति निरणायीति श्रूयते।

सर्वामेव शिक्षाप्रणालीमामूलचूडं पुनः परिशील्य अपेक्षितन्यूनातिरेक-समीकरणं यथा स्यात् तथा उपदेष्टुं शिक्षायोगः (Education

Commission) नूतनः कोऽपि आयोजितः। आसन् अनतिव्यवधानमेव शिक्षायोगाः भाषायोगाश्च,—विश्वविद्यालयविषयः, मध्यमपाठशालाविषयः, हिन्दीविषयः, संस्कृतविषयश्चेति चत्वारः। तेषामेष पञ्चमः सर्वंकषविचारव्यापृतः किं कथयिष्यति संस्कृतविषये इति न केवलं महता सन्देहेन, किन्तु बलवत्या भीत्या च व्याकुलितः सर्वः संस्कृतलोकः।

आङ्गलगद्यसाहित्ये सुप्रसिद्धेन डिकेन्स्-नामकेन सृष्टेषु पात्रेषु 'मिकाबर्' इति कश्चन सुविदितः, यः प्रतिपद्ममनिष्टेऽपि वातावरणे शुभोन्मुखं किञ्चिदापतिष्यति इति निरन्तरप्रत्याशया जीवितं निनाय। मन्ये, न वयं संस्कृतोत्सुकाः मिकाबरात् सुदूरवर्तिन इति।

द्रमिडदेशे प्रसिद्धा आढ्या ब्राह्मणेतराध्यक्षाधिष्ठिताः शैवमठाः सन्ति, यैः शिवालयधर्मकार्यं, शैवसमयपालनप्रचारणकार्यं च तत्तत् क्रियते। शैवसमयदीक्षिता बहवो गुरवः, शैवसिद्धान्ते द्रमिडभाषया ग्रन्थकर्तारश्च एतेषां मठानामधिपतिषु गण्यन्ते। शैवसिद्धान्तस्य संस्कृतसमन्वयोऽपि भूयसा वर्तते, संस्कृतवैदुष्यमपि शैवदर्शनानुसारिभिरपेक्ष्यते। 'तिरुप्पनन्दाळ्' इति य एतेषु मठेषु प्रसिद्धो मठः, तमद्यालङ्कुर्वद्भिः श्री-अरुळ्-नन्दि-तम्बिरान्-स्वामिभिः निजां संस्कृते पक्षपातितां व्यञ्जयद्भिः श्रीरामेश्वरक्षेत्रे तिरुनेल्वेलि-क्षेत्रे च पर्वतवर्धनी-कान्तिमती-अम्बिकादिव्यनामाङ्कितयोः बालिकानाम् उच्चतर-पाठशालयोः प्रत्येकं रू. २०,००० मूलनिधित्वेन दत्तं, यद्वृद्ध्या प्रतिपाठशालं बालिकानां संस्कृताध्यापनार्थं संस्कृतपण्डितः निरन्तरं नियोज्य परिपालयितव्य इति। संस्कृतमरुभूमितां क्रमशो जग्मुषि द्रमिडप्रदेशे पत्रिकासु प्रकाशिता वार्तेयं वृष्टिधारेव उत्कण्ठमानान् संस्कृतचातकान् प्रहर्षयिष्यति।

*  *  *

श्रूयते च मन्त्रिसभाया निर्णयान्तरम्- यद् भाविन्यां योजनायां यद्यपि वाराणसीय-दरभङ्गा-विश्वविद्यालयातिरेकेण अन्ये संस्कृतविश्वविद्यालयाः अन्येषु प्रान्तेषु न स्थापयितुमनुमन्तुं च शक्यन्ते, तथापि यत् तिरुप्पतिक्षेत्रे केन्द्रीयं संस्कृतविद्यापीठं स्थापितं, तदभिवर्धनं सर्वप्रकारकं कर्तुं यद्यदपेक्ष्यते, तत्तद् विधास्यत इति। हृदयाह्लादिनी वार्तैषा; आशास्महे च कार्यमार्गे तैस्तैर्विलम्बैः तैस्तैरात्ययिकैर्युद्धादिसंकटैश्च अप्रतिहता भृशं फलेग्रहितामालम्बिष्यत इति।

*  *  *

केन्द्रीय-संस्कृत-समितिः तृतीयवारं नूतना आयोजिता शासितृभिः। समितेरद्य जम्मू-काश्मीरराज्यपालाः डा० श्री. कर्णसिंहमहाशया अध्यक्षत्वेन नियुक्ताः। जम्बूस्थरघुनाथमन्दिरसंस्कृतपाठशाला-हस्तलिखितमातृकाशाला-काश्मीर-ग्रन्थमाला-इत्यादिद्वारा तैः, तद्राजवंशपूर्वपुरुषैश्च संस्कृतपरिपोषो महान् कृतः। साहित्ये, दर्शने, अलङ्कारे, तन्त्रागमयोः काश्मीरदेशेन संस्कृतार्थे किं किं न कृतम्? किं बहुना, स हि प्रान्तान्तरापेक्षया शारदादेश इति अस्माकं मनस्सु सदा सभक्तिस्फूर्ति आवर्तते। यथा भाविषु वर्षेषु केन्द्रीयसंस्कृतसमितिकार्यप्रकाराः इतोऽपि बहुतरं प्रतायमानाः फलवन्तश्च भविष्यन्ति, तथा सा शारदा देवी काश्मीरपुरवासिनी अनुगृह्णातु।

# भूरि वन्दे वसन्तम्

चि. द्वा. देशमुखः

तुहिनतिमिरतान्तं शीतशैथिल्यशान्तं
जगदखिलमदृश्यैः प्राणितैः प्राणयन्तम् ।
स्तिमितनियतिगर्भान्मोचयन्तं वनान्तं
प्रणयमुकुलबन्धुं भूरि वन्दे वसन्तम् ॥ १ ॥

चरणचरणचारुप्रस्फुरत्कोरकस्य
विविधसुमविकासोद्भासिताशामुखस्य ।
नवकिसलयरागाध्मातविश्वात्मनश्च
मधुरुचिरविजेतुः स्वागतं यत्र तत्र ॥ २ ॥

कतिपयजनितानां जङ्गमाजङ्गमानां
स्फुरति हृदि नवीनस्यायुरोघस्य रंहः ।
तदनुसरणशीलस्तत्तदुत्सर्गयोग्यो
मुखरयति दिगन्तान् ब्रह्मनादः पृथिव्याम् ॥ ३ ॥

प्रत्यग्रसंसृतिमहाकरणीयलग्नाः
पारावताश्चटकबुल्बुलसारिकाश्च ।
आरामसद्म परितो व्रततीषु गुल्मे-
ष्वारावमादधत इष्टिगतं नु मन्त्रम् ॥ ४ ॥

तेषां पुरोधस इव स्थलमुन्नतं च
पुंस्कोकिलोऽस्थिरितगीः समलङ्करोति ।
स्वाण्डानि यावदितरद्विजनीडमध्ये
स्वस्थात्मना निभृतवाग् गृहिणी निधत्ते ॥ ५ ॥

सम्पन्नकार्यपिकयुग्ममुपैति तूर्णं
स्वायातमाधवमरुत्तरलान् रसालान् ।
सौरभ्यशास्त्रनिपुणाः प्रथमं मिलिन्दा
गुञ्जन्ति यत्र मधुरं स्फुटमञ्जरीषु ॥ ६ ॥

रसालताम्राङ्कुरमञ्जरीचयं
स्वसौरभेण प्रथिताढ्यतोदयम् ।
सुमोद्गतं निम्बतरोः सुगन्धि चा-
वलोक्य चाघ्राय जनः प्रसीदति ॥ ७ ॥

अन्वाम्रमुन्मेषपराः सुमद्रुमा
अशोकमन्दारविहारचम्पकाः ।
युगच्छदा लोहितनीलपाटला
वनस्थलीषूज्ज्वलितासु किंशुकाः ॥ ८ ॥

वसन्तसाम्राज्यजयध्वजेरितो •
यथा न वायुः प्रमदः प्रकीर्त्यते ।
तथा ततो गुल्मलतादिषूत्सवो
नवप्रसूनैर्हृतलोकलोचनः ॥ ९ ॥

दिगन्तरासम्भृतपुष्पवीरुधः
प्रसूनगुल्मा गगनातिशायिनः ।
अलौकिकाकारसुमैः सुरञ्जनै-
र्विमोहयन्त्यक्षियुगं सुगन्धयः ॥ १० ॥

गिरिप्रदेशे नवशाद्वलान्तरां
प्रसूनसम्पत्तिमथैन्द्रकार्मुकीम् ।
विलोक्य कश्मीरतमालभूमिषु
त्विषेव दृङ् निर्निमिषा विमुह्यति ॥ ११ ॥

किंशुकांशुकपिशङ्गमध्यमा
नातिचण्डमिहिरांशुकञ्चुका ।
अश्मराशिपरिवेशदन्तुरा
गन्तुरन्तरहरा वनस्थली ॥ १२ ॥

वाटिकासु धनिमन्त्रिणामुदे-
त्युल्बणेन्द्रधनुषोऽप्यसंतुला ।
पुष्पराजिरनुविद्धशाद्वला
याचकालिसहिताहिताञ्जलिः ॥ १३ ॥

भारतस्य नगरेषु संकुला
व्याप्तृता जनपदे च सस्यदे ।
तत्प्रजा विरमति क्षणमात्रं
निम्बचूततरुमूलनिषण्णा ॥ १४ ॥

मन्थरे हि सरतो दिनरात्री
द्रागपैति तरणेः करमान्द्यम् ।
चैत्र एति च कदुष्णमारुतो
माधवीं विटपमूर्ध्नि चालयन् ॥ १५ ॥

उपवने पवनाहितशर्करं
नवरसालफलं च समश्नुते ।
लकुचमात्मकुचद्वयबन्धुरं
पुरवधूरवधूतहिमामया ॥ १६ ॥

अहिमदक्षिणमारुतपायिनी
ह्युपचितावयवा वनरा यथा ।
तरणितापमितेः सममेधते
विलय एति वसन्त उदातपः ॥ १७ ॥

# गीतजवाहरम्

रामकिशोर मिश्रः

॥ एतद्दुःखं बहु हृदये मे मया त्वमत्र कदापि न दृष्टः ॥

(१)

पुस्तकेष्वधीतं ते चरितम्
कर्मगतं ते ज्ञानमधिगतम् ।
मधुराकृतीनि चित्राण्यपि ते
दृष्टान्ययं तु विषयः क्लिष्टः ।
साक्षान्मया त्वमत्र न दृष्टः ॥

(२)

समाचारपत्रैस्त्वं ज्ञातः,
मोतीलालगृहे त्वं जातः ।
मानवधर्मप्रवर्तक ! पण्डित !
तद्विषये न मया त्वं पृष्टः ।
मया त्वमत्र कदापि न दृष्टः ॥

(३)

स्वरूपराणीपुत्र ! जवाहर !
त्वामाह्वयति, एहि, तव देशः ।
त्वमेव योग्यः प्रधानमन्त्री,
देशे ज्ञातस्तथा च दिष्टः ।
मया त्वमत्र कदापि न दृष्टः ॥

(४)

पश्य, विजयलक्ष्मीं विलपन्तीम्,
समाश्वासय तामद्य दुहितरम् ।
त्वमश्रूणि कृष्णाया अप्यथ
प्रोञ्छिष्यसि नो, किं स्वर्विष्टः ?
मया त्वमत्र कदापि न दृष्टः ॥

(५)

किमिन्दिराया न बाष्पशक्ति-
र्यया भवेरागन्तुं नालम् ।
न वा शक्तिरासीत्तद्रक्ते,
न ते यया कायः सन्तुष्टः ।
मया त्वमत्र कदापि न दृष्टः ॥

(६)

विवशो भूत्वा त्वमद्य तत् किम्
कमलामन्त्रणमग्रहीरहो !
येन स्वर्गतोऽप्सरोभिरिष्टः
कामं कामरूप आश्लिष्टः ।
मया त्वमत्र कदापि न दृष्टः ॥

(७)

कदापि न त्वं द्रष्टुमैच्छः
सर्वानस्मानश्रु मुञ्चतः ।
पुनरेतत्कथमद्य क्रन्दनैः
कृपालुहृदयस्त्वं न स्पृष्टः ।
मया त्वमत्र कदापि न दृष्टः ॥

(८)

आव्रज मे प्रिय! प्रधानमन्त्रिन् !
त्वामाह्वयति जन्मभूरेषा ।
पश्य, त्वदीयो देशः क्रुष्टः,
यत्र दयालुर्देवो वृष्टः ।
मया त्वमत्र कदापि न दृष्टः ॥

(९)

सोरोंनगरं कदापि न त्वम्*
शूकरक्षेत्रमिहागतः सखे !
येन मादृशैस्त्वदीयमित्रै-
रर्थाभावान्नो त्वं दृष्टः ।
मया त्वमत्र कदापि न दृष्टः ॥

(१०)

निकषा हरिगढं समागतस्त्वम् ,
तस्माद् दृक्पथमागतो न मे ।
परं तव स्मृत्याऽद्य मार्गयन् ,
त्वामहमिह विह्वल आकृष्टः ।
मया त्वमत्र कदापि न दृष्टः ॥

(११)

जिगमिषतापि मया हि देहलीम् ,
दुर्दैवान्नतु कालो लब्धः ।
तद्धन्यः स्यान्न कोऽपि मादृक् ,
येन त्वमत्र न दृग्भ्यामिष्टः ।
मया त्वमत्र कदापि न दृष्टः ॥

(१२)

एहि भारतं लाल जवाहर !
पश्य, त्वमत्र मानवैरिष्टः ।
भगवानिव भारत-निर्माता,
धन्यास्ते यैर्लोकैर्दृष्टः ।
मया त्वमत्र कदापि न दृष्टः ॥

॥ एतद्दुःखं बहु हृदये मे मया त्वमत्र कदापि न दृष्टः ॥

## श्रीमन्नेहरूश्रद्धाञ्जलिः

अ. वि. काणे

श्रीमद्विद्वद्द्विजवरकुले पूतविख्यातवंशे
जातः पुत्रो जनपदहिते दत्तदृष्टिर्नरेन्द्रः ।
देशोद्धारे कृतमतिलयो मोतिलालस्य सूनुः
राष्ट्रोद्धारार्पिततनुमना नेहरुवंशप्रदीपः ॥ १ ॥

नानाभाषाध्ययनपटुतां यातवान्पण्डितोऽसौ
प्रज्ञा तस्य प्रभवति तथा ज्ञानविज्ञानशास्त्रे ।
खण्डे खण्डे निखिलजगतो बन्धुभावं वितन्वन्
प्रोच्चैर्गर्जन्प्रचलति नभोमण्डले मेघ एव ॥ २ ॥

तत्प्रासादे सह नु रमते पद्मया शारदा सा
त्यक्त्वा चैवं विधिविरचितं वैरभावं सहर्षा ।
रूपाढ्या सा सुभगकमला तस्य कान्ता गुणाढ्या
केषां नैषा ननु गुणवती कामिनी कौतुकाय ॥ ३ ॥

बालैः सार्धं वदति हसति प्रायशो दीर्घकालं
बालोद्यानं भवति रुचये श्रान्तचित्तस्य तस्य ।
आलोक्यामुं सदयहृदयं नेहरूरूपं स विष्णु
रन्तुं काङ्क्षत्यथ नवयुगे किं पुनर्बालकृष्णः ॥ ४ ॥

नेता राष्ट्रस्य च नरवरो नेहरुरत्नप्रदीपो
भर्ता भाग्यच्युतजनगणानामसौ दुःखहर्ता ।
आयुः कालं गमयति चिरं मानवोत्कर्षहेतोः
स्वार्थे कामो न हि न हि कदा लोकसेवावृतानाम् ॥ ५ ।

धन्यो धीमान्धवलसुयशोभाजनं भारतेऽसौ
तेजोराशिस्तपति भुवने तेजसा भानुरेव ।
नक्षत्राणामपि च निचये तारकाणां गणेऽसौ
विद्वद्रत्नं विलसति जगन्मण्डले खे शशीव ॥ ६ ॥

शश्वत् शान्तिं विकसितमतिं विश्ववात्सल्यवृत्तिं
धीरोदात्तो वितरति नवोत्पन्नराष्ट्रेषु तेषु ।
अव्याजैस्तैर्जयति जनतामानसं हृद्यशब्दैः
प्रेमार्द्रा सा स्फुटहृदयगीः किं न दत्तेऽत्र लोके ॥ ७ ॥

स्वर्गं याते प्रमुखसचिवे भारतस्यास्य तस्मिन्
शोकच्छायातिमिरपटलैरावृतेयं धरित्री ।
तत्प्राणान्ते वमति गगनं कज्जलं कज्जलं किं
शोकग्रस्तं पतति भुवनं शोकसिन्धौ समग्रम् ॥ ८ ॥

# भारतम्, गान्धिः, नेहरुश्च

टि. ए. सरस्वती

अस्ति क्षोण्यां हिमशिखरिणा गुप्तकौबेरसीमा
शेषे भागे जलनिधिवृता भारतक्षेत्रभूमिः ।
धीरोदात्तैः कुशलमतिभी राजभिः पालिता या
रेजे पूर्वं मधुघृतमयी स्वप्रजाक्षेमदात्री ॥ १ ॥

यस्याः पुत्रैर्निपुणनिपुणैः निर्मितैः शिल्पिसङ्घै-
श्चेतोहारैरतुलसुषमैरर्थजातैः सहैव ।
अब्धीन् तीर्त्वा प्रजवितरिभिस्तत्क्रयप्राप्तवित्तै-
र्जन्मस्थानं द्विगुणितसुखं देवकाम्यं व्यधायि ॥ २ ॥

एवं भूत्या चिरपरिवृता यत्प्रजा नैव जाताः
मूल्येऽध्यात्मे विमुखमतयः किंच तद्दर्शनानि ।
चीनाजप्पान्प्रभृतिषु तथा पश्चिमासु क्षितीषु
प्राप्तामासन् द्रुततरमहो व्याप्तिमन्यैरलभ्याम् ॥ ३ ॥

काले याते महति सुखतो भारतीयस्य नष्टा
राष्ट्रक्षेमप्रियसहचरी बुद्धिरेकत्वरूपा ।
दासीभूता तदनु कदनैः कातरा मातृभूमि-
र्वैदेशीयैः सकलवसुभिर्वञ्चिता दीनदीना ॥ ४ ॥

दूरीकर्तुं विविधविकृतीरक्षमा भारतीयाः
मोहाभिख्ये गहनविपिने भ्रान्तमार्गा विचेरुः ।
अन्ते शेषैः सुकृतशकलैः प्रादुरासीन्महात्मा
गान्धिर्नेता विवशजनताप्राणदाता महर्षिः ॥ ५ ॥

कृत्वा लोकान् विगलितभयान् हेतिहीने रणेऽसौ
जित्वा शत्रोर्हृदयमदयं जन्मभूमिं स्वतन्त्राम् ।
दृष्ट्वा धीरो बहुजनमतः स्वर्गतिं प्राप शिष्यान्
मत्वा शेषे भरणविषये बद्धसर्वात्मशक्तीन् ॥ ६ ॥

दिष्ट्यैवासीन्महितमहिमा नेहरुवंशे प्रसूतो
धीरः शिष्यो जवहर इति ख्यातसार्थाभिधानः ।
नानारूपानभिमतगुणान् कान्तगम्भीरभावान्
बिभ्राणो यः सकलभुवनैरर्चितो मानितश्च ॥ ७ ॥

पाश्चात्यैर्यः स्वरुचिसरणौ शिक्षितो बाल्यकाले
स्वात्मस्यूतां भरतधरणीसंस्कृतिं नैव मुञ्चन् ।
धारायुग्मं मनसि निवहन् तीर्थभूतो धरित्र्यां
स्थाने वृत्तस्तपनतनयागङ्गयोर्योगतुल्यः ॥ ८ ॥

तेनैवासौ सकलवसुधां भावयन् स्वस्य गेहं
सर्वान् लोकानतनुबलवत् स्नेहपाशेन बद्ध्वा ।
संख्यातीतान् वशमगमयत् वश्यवाणीविलासैः
श्रोतॄंश्चित्रं सुहृदयवशात् मन्त्रमुग्धानिव स्वान् ॥ ९ ॥

अस्मान् दुःखार्णवपरिगतानाशु कृत्वा गतोऽसौ
मिश्रीकृत्य प्रियतरकणैः जन्मभूमेः स्वभस्म ।
तत्प्रारब्धे भरतधरणीसेवने स्वार्थहीनै-
र्लग्नैर्हित्वा कपटमखिलं तर्पणीयस्तदात्मा ॥ १० ॥

## अत्यन्तकामोऽन्तकः

बहादुर्चन्द्रश्चापोत्कटः

घुण इव काष्ठं शनकैरलक्ष्यमाणः सदास्ति भुञ्जानः ।
रूपाढ्यानां रूपं धूर्तानामग्रणीः कालः ॥ १ ॥

कालोऽस्ति कामुकानां सर्वेषामेव मूर्धन्यः ।
आसृष्टेः सौन्दर्यं निरन्तरं हन्त यो भुङ्क्ते ॥ २ ॥

भुञ्जानस्य निरन्तरं त्रिभुवने सौन्दर्यमा जन्मनो
निर्वेदो न परिश्रमो न न पुनर्यस्यास्ति तृप्तिः क्वचित् ।
कामी कामवतां स एव नितरामत्यन्तकामोऽन्तकः
ये रूपाग्निशिखापतङ्गशलभाः किंकामिनस्ते वयम् ॥ ३ ॥

रूपयौवनकान्तीनां कालो वै पश्यतोहरः ।
अस्य निग्राहको लोके न भूतो न भविष्यति ॥ ४ ॥

यान् रक्तानधरान् क्रमेण नितरां पीतानिवालोकसे
गण्डान् पाटलपाटलानपि तथा यान् वीक्षसे चूषितान् ।
पीनान् यांश्च पयोधरान् अनुपदं निश्च्योतितान् वीक्षसे
कालेनैव दुरात्मनाभिसरता भुक्तोज्झितास्ते ध्रुवम् ॥ ५ ॥

रम्याणां हन्त रूपाणि कालेनानेन कामिना ।
प्रकामं भुज्यमानानि विक्रियन्ते दिने दिने ॥ ६ ॥

# ज्ञानवल्ली

## डा. हरिदत्त पालीवालः "निर्भयः"

गच्छामि, गच्छ विदितस्वसमस्ततत्त्व!
तत् त्वं तु वेत्थ, न पदं विपदास्पदस्य ।
मा मुञ्च यत्नमपि चेद्विफलः स भूयो
विश्वेशपाददयया सफलोऽपि भूयात् ॥ १ ॥

कालोऽपसर्पति न सर्पति कार्यभारः
किञ्चैष ऋध्यति न चर्थ्यति जीवनं मे ।
तच्चापि लुप्यति न शाम्यति मे दुराशा
बद्धो यया जगति नर्तनमाचरामि ॥ २ ॥

संसारसारमभिलष्यसि चेन्मनस्त्वं
पूर्वं विलोकय सखे जगतः प्रपञ्चम् ।
कोऽयं विविच्य रचितो ह्रियते च केन
लीला च कास्य किमदश्च सृजा नियुक्तम् ॥ ३ ॥

किं जन्मना न विदितं स्वरहस्यरूपं
तेनापि किं नु विदितेन यदि प्रलिप्तः ।
तस्माद्विहाय जगतः सकला दुराशा
यत्नं विधेहि विमलात्मविलोकनाय ॥ ४ ॥

किमर्थमाप्तं नरजन्म चिन्त्यताम्
भवाटवीषु भ्रमता शरीरिणा ।
अमृष्टदेहाप्तिफलो नराधमः
करोति यत्तन्न हि शान्तिकारणम् ॥ ५ ॥

असंख्यजन्मार्जितपापसंचयो-
द्भवात्कुसंस्कारसमूहकारणात् ।
असंख्यदेहेषु गतः परिष्क्रिया-
मवाप्य चासीदति जन्म मानुषम् ॥ ६ ॥

तदापि विद्युच्चलजीवितो नरो-
ऽभिमानतो दारधनादितत्परः ।
अमूल्यरत्नं समयं जहाति हा
न वेद चात्मानमृतापि भावि वा ॥ ७ ॥

शिशुत्वकाले किल केलितत्परः
प्रियानुरागी ललिते तु यौवने ।
जरानुलिप्तो विकलः कलाहतः
क्षमो न कर्तव्यविधौ नरो भवेत् ॥ ८ ॥

रे चित्त किं न भजसे तमनन्यरूप-
मात्मानमेकमविकारमचिन्त्यरूपम् ।
भिन्नं यतः किमपि नास्ति समस्तरूपं
यस्य स्मरन्ति मुनयः सततं स्वरूपम् ॥ ९ ॥

जानासि यद्रमणमात्मसुखस्य बीजं
तन्निश्चितं परिणतावतिदुःखहेतुः ।
तेजो विनाशयति सत्त्वविनाशकारि
तत्त्वं जहासि न हि तत् क गतो विचारः ॥ १० ॥

रामे रमस्व रमणं यदि वाञ्छसि त्व-
मर्थं विचार्य विनिमुच्य समस्ततृष्णाम् ।
यद्दृष्टिगोचर इहास्ति हि सर्वमेव
मायाकृतं तदपकर्षति बन्धनाय ॥ ११ ॥

आसक्तिरेव विषयेषु कठोरपाशो
बद्धो दृढं पुनरयं न भवान्तरेषु ।
नैकासु योनिषु पतन्नपि धीविहीनो
निर्मुच्यते न विवशो हतबोधनोऽसौ ॥ १२ ॥

देहे जरामुपगते श्लथतां गतेषु
सर्वेन्द्रियेषु विषया यदि नैव सेव्याः ।
ज्ञानं तदाजनि किमप्यथ तन्न मोक्तुं
सम्यक्क्षमं विषयवासदुरासपाशात् ॥ १३ ॥

देहे करोष्यभिमतिं नु किमस्ति तत्र
मेदोऽस्थिरक्तकफमूत्रपुरीषवर्जम् ।
नो दृश्यते किमपि तत् त्वमु यत्र धत्से
मोहाभिमानमथ भङ्गुरमेककाले ॥ १४ ॥

येनेन्द्रियप्रसृतमत्तमहाहयानां
वेगं निहत्य वशमागमिताः प्रसह्य ।
इन्द्रोऽपि तेन विजितः स मुनिः स योगी
तेनास्ति कोऽपि न समः स विदन्महीयान् ॥ १५ ॥

भूमिर्भुवं जलमिदं जलमभ्युपैति
तेजः स्वमम्बरमिदं गगनं शरीरात् ।
प्राणोऽनिलं धियि मनो मनसीन्द्रियाणि
धीरात्मनीति सह नान्यदनेन याति ॥ १६ ॥

आशाः समस्ता मनसो विकल्पा-
स्ताभिर्युतो याति भवान्तराणि ।
आशाविहीनः सुकृती प्रबुद्धो
न कल्पते नाम पुनर्भवाय ॥ १७ ॥

पुण्येऽपि पापेऽपि निवृत्तवृत्ति-
र्मित्रेष्वमित्रेष्वपि तुल्यदृष्टिः ।
आत्मीयमेतत्परकीयमेत-
देतां मतिं चित्तपटान्निरस्येत् ॥ १८ ॥

मुक्तिं यदीच्छसि सखे भज राममेकं
कामान् विहाय सकलान् गतभेदबुद्धिः ।
तत्सोऽहमस्मि न च मत्किमपीह भिन्नं
विद्वानिति प्रयत एष्यसि सत् स्वरूपम् ॥ १९ ॥

प्राप्ते च तस्मिन्न हि कापि वाञ्छा
सर्वेष्वहं मय्यपि सर्व एव ।
आनन्दरूपोऽतितरां प्रशान्तो
निर्लेपभावोऽनुविकाशमानः ॥ २० ॥

यथा समुद्रे न हि बिन्दुरीक्ष्यते
क्षते घटे तद् गगनं न लक्ष्यते ।
तथा गतो ब्रह्मपदं भवाभवा-
दलक्ष्यरूपोऽपुनरागमाय ॥ २१ ॥

## "अहो अकरुणाः खलु ईश्वराः!"

**माधव देशपाण्डे**

मुग्धो वायुर्वियति विचरन् मत्ततां संविधत्ते
दीना मेघा गलितविभवा दैन्यमुद्भावयन्ति ।
निर्विण्णेयं जनयति शुचं निश्चला वृक्षराजिः
क्लान्तश्चन्द्रो मनसि तनुते मन्दतां वीतकान्तिः ॥ १ ॥

दीनं चित्तं विलयमयते शोकसारे गभीरे
मान्द्यं सृष्टेर्विशति हृदयं पूर्वनिर्भिन्नबन्धम् ।
चेतोवीणां क्वणयतितरां शल्यमन्तर्निगूढम्
भावोद्वेगात् सृजति नयनं किञ्चिदुष्णं प्रवाहम् ॥ २ ॥

दृष्ट्वा नूत्नां परमसुषमां सृष्टिमेतां वसन्ते
चूतोद्भेदे मधुमदरसं मञ्जरीणां निपीय ।
सम्भ्रान्तेन स्फुरितरुचिना नैकवारं मयासीत्
कष्टं ! मुग्धं !—मनसि लिखितम् 'जीवितं कान्तमेव' ॥ ३ ॥

काञ्चित् प्रीतां विदितहृदयां वीक्ष्य माङ्गल्यमूर्तिं
शून्ये चित्ते मम समुदितो नूतनः कोऽपि रागः ।
मय्युद्भिन्नं नयनसुभगं भावमापीय हर्षात्
सानन्दं मे हृदयमतनोत् नन्दिता सा नितान्तम् ॥ ४ ॥

भावाक्रान्तं भुवनमखिलं भावरूपं ममाभूत्
तावत् जाता परुषमनसः पद्मयोनेरसूया ।
सञ्जातो मे मनसि रुचिरो नूतनो योऽनुरागः
कौटिल्यं तत् पुनरिह विधेरुत्थितं तं निहन्तुम् ॥ ५ ॥

कष्टम् !—'कान्तं जगद्' इति– गदन् मर्मरो निर्झरीणां
ग्रीष्मापाये स्वतनुविरहादन्यथावृत्तिरेव ।
काले रम्यो नवमधुरिमा यत्फलानां, स चूतः
शाखाशेषः शिशिरसमये शीर्यते मन्दभाग्यः ॥ ६ ॥

वैक्लव्यं नः प्रणयिमनसां दारुणं तत् चिकीर्षोः
दुष्टं चित्तं तव हतविधे ! दूयते किं न तीव्रम् ।
कष्टम् ! प्रेम्णो गहनगहना किं गतिर्निष्ठुरान्ता
नान्यः पन्थाः ! कथमकरुणा ईश्वराः ! हन्त ! हन्त !! ॥ ७ ॥

# कज्जली (गज़ल)

शिवप्रसादो भारद्वाजः

त्रियामे ! याति यामोऽवेक्षसे कस्याऽऽगतं बाले ?
प्रियः कस्ते शुभे ! त्वं वीक्षसे यस्याऽऽगतं बाले ?
शशी द्वारे चिरादास्ते प्रसादार्थं तव श्रीमान्
अतः प्रेयानसौ कोऽवेक्षसे यस्याऽऽगतं बाले ?
इदं नीलाम्बरं चित्रं तथा रत्नावली तारा ।
सुसज्जा किं तदर्थेऽवेक्षसे यस्याऽऽगतं बाले ?
किमर्थं कोपने ! मुक्तं तमिस्रं केशपाशोऽयम् ।
शठो यातोऽन्यतः किं वीक्षसे यस्याऽऽगतं बाले ?
सखी ते कौमुदी मूका दधाना दीपितामुल्काम् ।
विचेतुं किं गता तं वीक्षसे यस्याऽऽगतं बाले ?
सुखं निद्रारसे मग्नं तमिस्रं केश-पाशोऽयम् ।
विनिद्रा त्वं वराकी वीक्षसे कस्याऽऽगतं बाले ?
किमर्थं शोभने ! श्यामं मुखं, ते मानसं दूनम् ?
अलज्जः को गतस्त्वं वीक्षसे यस्याऽऽगतं बाले ?

# अन्यापदेशपरिशिष्टम्

## ९. महालिङ्गशास्त्री

सरसि न भवदन्यो राजहंसास्ति मान्य-
स्तव न सदृशमेवं क्लिष्टधर्मस्वनैष्ण्यम् ।
खलमतिरयमल्पः पश्य दर्पाद्बकोट-
स्त्वयि भवति नृपीयन् बाधते मीनलोकम् ॥ १ ॥

दर्पोद्रिक्तो दम्भवृत्तिर्बकोटः
सासूयस्त्वय्यस्त्ववज्ञाकरालः ।
सुन्दर्यस्त्वां शिक्षितुं यानलीलौ
संसेवन्ते किं न हंसावतंस ॥ २ ॥

साटोपमारटति चञ्चति मौकलीन्द्रः
स्तोकोच्छ्रितिप्लुतिरपि द्रुचरावलीषु ।
मूर्खस्य तस्य मुखरस्य दुरुद्धुरस्य
को नाम लालनरसः क इवोपरोद्धा ॥ ३ ॥

मित्रस्योदयशंसिनि त्वयि धृतोल्लासामिमां पद्मिनीं
मुग्धस्मेरदृशं किमाविलयसि प्रत्यूष दीर्घीभवन् ।
येन त्वत्प्रतिबोधितैर्मधुकरैरस्या निपीतोऽधरः
शीलं स्वच्छमिवाहृतः परिमलो वैभातिकैश्चानिलैः ॥ ४ ॥

वाताशनस्य तव नास्त्युपभोगलेशो
रम्येषु वस्तुषु तथाप्यतिदुर्जनोऽसि ।
यच्चन्दनेषु निधिमौलिषु केतकीषु
तिष्ठन् फणीन्द्र निरुणत्सि तदाजिहीर्षून् ॥ ५ ॥

भर्तुश्चण्डकरानुवर्तनदशाखिन्नस्य बंभ्रम्यतः
प्रायो दुर्घटगाढसंगमरसास्वादोत्सुका यामिनी ।
यावद्ध्वान्तशुचं विधूय रुरुचे पक्षे सिते पुष्कले
तावत्प्रादुरभून्निरुद्धगगनाभोगा च कादम्बिनी ॥ ६ ॥

भृङ्गान्नाद्रियते मधूनि ददती कादम्बगोष्ठीरसै-
नैवापह्नियते न सौरभभरादाने मनाग्रज्यति ।
किंचोन्मुद्रणविस्मृतस्मितमुखी वीतोत्सवा पद्मिनी
तीव्रं धारयति व्रतं दिनकरो यावत्पुनर्दृश्यते ॥ ७ ॥

दृष्टादृष्टचरा ह्रियेव लुलिता या पूर्वमस्थाद्गृहे
सैषा दीपशिखा न यावदरुणो दृग्गोचरादत्यगात् ।
तावद्द्वारमुपेयुषी विलसति स्वैरं पतङ्गान् बहून्
कान्त्या विभ्रमयन्त्युदारविहृतिः सर्वत्र संदृश्यते ॥ ८ ॥

आरब्धानिलपारणैः विषधरैः स्थानं स्वमावेष्टितं
त्यक्त्वा निष्पतितः पथि प्रतिहतः पृथ्वीभृतां शृङ्गकैः ।
विद्विष्टो वियुताङ्गनाभिरभितः पीतश्च वातायनैः
स्थाने जर्जर एष यात्युपवने मान्द्यं मरुद्दक्षिणः ॥ ९ ॥

कालज्ञासि न शारिकेऽतिमुखरे केकिन् कृतं ताण्डवैः
आलापैरलमन्यपुष्ट विरम द्रागेव मन्दानिल ।
कामं कामिमनोविनोदकुशलाः सन्त्येव वस्ते गुणाः
किंतु प्रोषितभर्तृकापरिजनः खेलां न वो मृष्यति ॥ १० ॥

दुष्टं वा कलिलं जलं यदभितः कुल्यामुखेनाथवा
गूढं भूविवरैः प्रविश्य सुमते केदारमापूरयत् ।
तेन प्रक्षरता न भाव्यमिह तद्बध्नीहि सेतुं दृढं
यद्यन्तः कलमोदयो यदि बहिः केदारविस्फोटनम् ॥ ११ ॥

वर्धिष्णुप्रचलोर्मिमालतुमुलस्याप्राप्तपारस्य च
क्षारस्याम्बुनिधेरलक्षितगृहीतैकान्तसारो घनः ।
दूरे व्योम्नि समुन्नतो निरवधौ स्फारीभवन्नात्मना
स्वादु स्वादु पयः प्रवर्षति जगज्जीवातुसिद्धौषधम् ॥ १२ ॥

सीतावृत्त्युपलम्भनर्मसुहृदे संग्रामरङ्गे महा-
योधायोचितमन्त्रमन्त्रिसदसे काले च वाहाय ते ।
भ्रातुर्जीवितदायिने गुणवते यस्मै स्वमाशंकते
कार्तज्ञ्यं प्रति दुर्विधं रघुपतिः धन्यस्स वातात्मजः ॥ १३ ॥

आसारस्य नभस्यविभ्रमभृतो लोके प्रवृत्ते रये
नैयत्येन समभ्युदेति तटभूः संरोधिनी पार्श्वयोः ।
आचाब्धेरनुगामिनी लघु निपीड्याध्वन्यवस्थापनी
किंचौद्धत्यनिवारणी प्रतिनवोन्मेषश्रिया हारिणी ॥ १४ ॥

वंशश्यामदलोदरेषु पतिता हैमाः प्रगे बिन्दवः
शर्वर्यां तुहिनांशुसंभृतलसत्तेजोभ्रमापादकाः ।
भ्राजन्ते विहितोदयस्य तरणेः हस्तावमर्शात्क्षणं
लीयन्तेऽनुपदं कियच्चिरमतस्तिष्ठत्यमीषां स्मृतिः ॥ १५ ॥

क्रुद्धाशीविषरुद्धकोटरशतप्रक्षुण्णहृद्गर्दभ-
ध्वानोद्विग्नतया विशीर्णकरणं धत्तूरदुर्लक्षणम् ।
उन्मीलन्मधुसंपदि क्षितितले जीवामि कुड्यं कुतः
किं नोदेष्यति मत्कथास्मृतिहरो हा हन्त धाराधरः ॥ १६ ॥

प्रावृड्दुःश्रवगर्जितैः प्रतिभया सन्तर्जयामास नः
सन्तापग्लपितं व्यधत्त भुवनं ग्रीष्मो दुरूष्मोद्धतः ।
सर्वस्यापचितिं ततो द्रुमनदीमुख्यस्य चक्रे शरत्
हेमन्तोऽपकरोति न स्फुटमहो लोकः किमस्राविलः ॥ १७ ॥

केनोप्तोऽसि किमीहसे परपरिष्कारैरुपस्कार्यतां
सुस्फीतः स्नुहिपादप त्वमभितो रोहन्नलं पुष्यसि ।
नित्यं प्रत्यनुपालिताऽपि पुरुषैः प्रागेव पुष्पोद्गमा-
त्प्रम्लायन्त्यनिलैरियं क्व तव भोः क्षुद्रा लता माधवी ॥ १८ ॥

सद्वृक्षादहमङ्गिनो विदलितत्यक्तो वहन् काष्ठतां
शुष्यामि स्फुटितोदरे क्षितितले त्वग्दाहदग्धः शुचौ ।
यावद्भ्रश्नभून्न कश्चन मया सस्वार्थकस्तावता
मामाप्लावय वर्षवारिविधृतं द्रागम्ब कादम्बिनि ॥ १९ ॥

किमीप्सामो देवैरुपनतविषत्रासविधुरै-
स्तृषोपेतैर्याते नयनपथमद्धाऽमृतघटे ।
स एवैकोऽस्माभिः स्तुतिनतिभिरीड्यः पशुपति-
र्द्रुतं येन क्ष्वेलः स्वयममृतकल्पः कवलितः ॥ २० ॥

भित्त्वा बन्धनचारकं व्यपगतो वैराग्यलक्ष्मान्वितं
कश्चिद्वर्ष्म वहन् निवर्तनकथादूरान्तरे. वर्त्मनि ।
यातः क्वापि शुनीसरोषभषणैः क्वाप्यर्यकाणां हसैः
क्वापि क्रुद्धदुरीश्वरव्यतिकरैर्दीर्घो दिशो धावति ॥ २१ ॥

रथ्यामारुतलोलचीवररुरुत्सोद्दामकेलीक्रमः
श्वा यः शौर्यमदं बिभर्ति रमयन् पिण्डप्रदं साक्षिणम् ।
सोऽयं प्रस्तरघृष्टमुष्टिमुपलभ्याभ्यागतं भिक्षुकं
जङ्घाभ्यन्तरलीनवालवलयो दीनं दिशो धावति ॥ २२ ॥

[1]"मेत्तूर्"वारिनिरोधमन्वणुपयः सह्यात्मजायास्त्वयि
प्रायो न क्षरति क्रमेण पुलिनान्यारूढगुल्मानि ते ।
भ्रातः [2]"कोल्लिट", कार्श्यभागपि भवानद्यापि कोणे क्वचि-
द्वेणीं बिभ्रदपामहो तु महिमा! नावैव सन्तीर्यते ॥ २३ ॥

सूर्याचन्द्रमसौ पुरा तिरयितुं सोत्सेकमुत्सोढवान्
यः कष्टं घटभूनिशुम्भनिकृतो नीचैः स्थितिं लम्भितः ।
राजद्राजतशैलशेखरललद्गौरीशहीर, प्रभो
तस्मिन्न प्रवणो गुणैर्यदि भवान् विन्ध्योऽस्मि वन्ध्यः पुनः ॥ २४ ॥

हंसः सारसचक्रसाह्वयबकप्रायैरुपेतः खगै-
र्नीत्वर्तूनपि कांश्चिदृच्छति रसाद्भूयः सरो मानसम् ।
यत्र स्वोचितसंसदुन्मदमिलत्केलीकलः काङ्क्षति
स्वर्णाम्भोरुहसूत्रिकाकबलनं स्वच्छे तुषाराम्भसि ॥ २५ ॥

अन्तेवसंस्तव वसन्त इहास्मि भृङ्गी-
सङ्गीतसौरभसुखानिलपारिणाह्यः ।
यावन्न फाल्गुनतुषारपटीमपास्य-
न्निन्त्सेऽर्यमन् अनुमतोऽस्तु कथं जनोऽयम् ॥ २६ ॥

---

१. Mettur Dam.

२. The river Coleroon, Kollida in Tamil.

यत्ते शरत्समय, विश्वसिता वसामः
पद्माकरे त्वमथ चेन्निविवृत्सुराराात् ।
काले तुषारपरुषे क इवाभ्युपायः
किं वर्तनं भवतु नः क नु वा व्रजामः ॥ २७ ॥

नामी विभ्रमिणो विकासिषु रसादभ्यस्तयाच्ञागिरो
नैवामी धृतताण्डवा जलभृतो दृष्ट्वोन्नतान् दुर्दिने ।
नास्माकं कवलार्थमेकचरणस्थित्या जडोपासनं
त्वं चेद्यास्यसि कोटरे पुनरमी लीयामहे माधव ॥ २८ ॥

संडीनप्रतिडीनडीनडयनप्रोड्डीनपश्चात्पुर-
स्तिर्यग्डीनविलोमडीनविकटव्याडीनमुख्यान् क्रमान् ।
अभ्यासात्परिबिभ्रतः क नु वयं काका वराकाः पुनः
कामी पक्षविधूननेऽप्यलसका वैण्कुठवाहाः खगाः ॥ २९ ॥

संशुष्ककीकसखटत्कृतिसव्रणान्त-
स्तालुस्रवद्रुधिरलेहनतृप्तिभाजः ।
कौलेयकस्य कतमा वयमम्बुजिन्याः
पाथः सुगन्धि करपूरितमापिबन्तः ॥ ३० ॥

यन्मानुष्यविडम्बनं प्रहसनं चेष्टास्वरूपादिभिः
किञ्चियश्च विलोपकर्म विदधद्व्याहन्ति यत्नान् शतम् ।
शाखावास्तु तदेव वास्तु परिपोष्यांसे धृतं लालयन्
वीरो वष्टि विलक्षणं व्यतिकरं कस्तत्पुरः प्रक्ष्यति ॥ ३१ ॥

गङ्गाजलचिरमज्जन-
शुद्धिं गर्वेण वर्णयत्युपले ।
अवकररुद्धो मणिरथ
कमुदञ्चयतु प्रभावं स्वम् ॥ ३२ ॥

रोहन्ति निर्भरममी स्नुहिभूरुहस्ता-
नुत्सृज्य दूरमपसर्पति सर्पभीत्या ।
लोको जिहन्ति चरणैर्नवशाद्वलानि
निर्व्याजमार्दवगुणानि पथि स्थितानि ॥ ३३ ॥

सरित्सु सलिलोद्गमाः पुलिनवालुकाखानिता-
स्तुषारलवमौक्तिकद्रवमनोहराः शीतलाः ।
भवन्ति तृषितैः सुखं जगति सेव्यमाना जनैः
प्रपातपरुषा झरा न खलु भूरि संराविणः ॥ ३४ ॥

अयि मातः शार्दूली
गौरपि पिबतो जलं किलैकत्र ।
न मुनिर्नाश्रमदेशः
किं भो गोचर्मधारिणी व्याघ्री ॥ ३५ ॥

असावसृक्पायिषु किं न गण्यते
न किं गरुत्मानुचितः पतत्रिणाम् ।
विचक्षणः किं न निशासु गायन-
स्तथापि तुच्छो मशकस्तु दंशकः ॥ ३६ ॥

उत्क्षिप्याङ्घ्रिमिहाश्मनस्तर शनैरुन्मोचयोर्वोल्लिताः
संदंशान् विधुनीहि गात्रचलनैर्गुल्मान्तरं मा विश ।
हा कष्टं परिहृत्य किं विचरसि स्वं स्थानमव्याकुलं
कूलेऽस्मिन् तृणगूढकूपकुहरे धेनो कुतस्ते रुचिः ॥ ३७ ॥

गीताचार्यकृताधिरोपणधराश्रीपारिजातान्वयं
कस्त्वां वेद वने फलैः किसलयैः पर्णैः प्रसूनैश्च वा ।
भ्रान्ता नागरिका न दारुणि पुनश्छिन्दन्ति यद्दारुणा-
स्तद्भाग्येन सखे न खेदय धियं स्वर्गच्युतिं चिन्तयन् ॥ ३८ ॥

यद्वक्त्रं मलिनीकरोति च तिरोधत्ते यदीयं महो,
यामुद्वेलशुचं करोति दलयत्याशां च यत्प्राणने ।
जीमूतो गगनांशुमालिजनतासस्याङ्कुराणामहो
तेषामेष पराभवोर्जितधिया कालेन दत्ताभयः ॥ ३९ ॥

क्षुद्रस्वार्थाः श्येनाः मौकल्यो जातिमात्रविश्वासाः ।
आगरुडादा च बकात् सरसीमत्स्यार्थमुद्यतद्रोहाः ॥
कः क्षीरनीरभेत्तरि मानससरसीविहर्तरि श्लाघाम् ।
जतुकाकौशिकमशकप्राये ध्यायेद्विहङ्गसमुदाये ॥ ४० ॥

वर्णं न प्रतियोजयिष्यसि विधास्यस्येव नो मार्दवं
स्रक्ष्यस्यत्र न सौष्ठवं परिमलं न प्रेरयिष्यस्यपि ।
आरामे यदि रोपितः सुमनसां लब्ध्यै लतापोतको
वाटीप, प्रतिपालयास्य समयं कृत्वाऽद्भिरासेचनम् ॥ ४१ ॥

गाम्भीर्यं मम जानते कति बतेत्यब्धिर्गतः क्षारता-
मश्मैवाभवदद्रिराडपि मदौन्नत्योन्मुखः को न्विति ।
भूमानं मम जातु वेत्स्यति क इत्याधान्नभः श्यामतां
लोकं विस्मृतशासनं प्रति शुचा पुस्फोट देवोऽष्टधा ॥ ४२ ॥

हंसानां विरलेऽन्वये विगलितः पश्चान्मरालो युवा
नाप्यैर्नाटविकैश्च वा खगकुलैर्नैवापि वैहायसैः ।
कैश्चित्प्राप गुणानुमानविमुखैर्भूयोऽपि भूयो भ्रमन्
पक्षित्वेन विभावनामपि कुतस्तस्याभिजात्योचिताम् ॥ ४३ ॥

कूटस्थैर्गलरेखया तनुरुचा गत्या विनत्या शिरो-
रत्नेनोन्नटनेन वा फणभृति स्नेहं निबध्नासि किम् ।
जिह्वे द्वे चपले विषं मुखबिले दंष्ट्राकरालेऽनलं
क्रोधे पश्यसि नास्य मृत्युरयि भो मृत्युस्तवासौ पुरः ॥ ४४ ॥

आलिङ्गन् शल्लीं वराहयुवतिं चुम्बन् रिरंसन् शुनीं
शार्दूलीमभिलापयन्नुपनयन् शय्यां भुजङ्गाङ्गनाम् ।
सर्वात्मन् कथमीश्वर त्वमखिलप्राणिप्रमाणे स्थितः
शृङ्गारानुविधानकर्मठतया बीभत्समासेवसे ॥ ४५ ॥

प्रत्यङ्मरुद्भ्रमवशादतिमात्रचित्त-
धाटीवलत्तृणरजोवदमी न हार्याः ।
वृक्षावलीव न च बाहुशिरोऽभिनीति-
व्यक्तानुवृत्तिशरणा वयमद्रिकूटाः ॥ ४६ ॥

क्षुद्रेष्वश्मसु काञ्चनाविरलितप्रान्तेषु नारीनर-
ग्रीवावक्त्रकराधिरोहणलसल्लीलावलम्बिषु ।
धूलीधूसरितः पदा च निहतो यस्यापि कस्यापि वा
सद्रत्न त्वमुपैषि मानसरुजाशान्तिं हि रत्नत्वतः ॥ ४७ ॥

लक्ष्मीं कस्यचिदप्सरोगणमथाप्यन्यस्य कल्पद्रुमान्
कस्यापि प्रददौ स दुग्धनिधिरित्यास्तां वृथैषा कथा ।
क्षारैरेव कदम्बुभिः प्रतिभयैर्यादोभिरन्तर्धृत-
ज्वालः सिन्धुपतिर्हलाहलगृहं प्रत्येतुमर्होऽस्ति नः ॥ ४८ ॥

वारान् षड्दश दारिकान्नकबलोच्छिष्टैरुपच्छन्दितो
रथ्याश्वा गृहदेहलीमथ विशन्नन्तश्च भक्ताशया ।
उद्विग्नैर्गृहमेधिभिर्बहुतिथं धिग्धिग्धिगित्युद्गतै-
रास्फोटैर्लगुडैः कवाटघटनैः कष्टं विनिष्कास्यते ॥ ४९ ॥

वातोऽसौ पवते हितः किल ममेत्यासं क्षणं विस्मितः
कष्टं भोश्चपलेन तत्कृतमहो सन्तापसन्दीपनम् ।
येनाधूतवरांशुकान्तमवशाल्लग्नं हतप्रान्तरे
गुल्मे कण्टकिनि क्षमोऽस्मि न चिरादादातुमप्रक्षतम् ॥ ५० ॥

( अनुवर्ति )

# भारतशतकम्

रामकैलास पाण्डेयः

आरुह्य भूतेशगिरेर्ललाटं
भणत्ययं लोकललामदेशः ।
सपत्नवक्षः प्रविदार्य पुत्राः
कीर्तिध्वजं दर्शयत प्रफुल्लम् ॥ १ ॥

हर्षावहो नो मनसो विचारो
दन्दह्यते हृद्गतभावना च ।
कथं सुता मे विरहय्य पूतां
प्रवृत्तिमन्धे तमसि भ्रमन्ति ॥ २ ॥

आकार्य पुत्राञ्जनको यथा हि
तनोत्युदारां मधुराञ्च शिक्षाम् ।
तथैव भूयिष्ठमुदे प्रजानां
तनोम्यहं गौरववृत्तवल्लीम् ॥ ३ ॥

शकुन्तला यं नयनाभिरामं
हृद्यञ्च नव्यं सुषुवे कुमारम् ।
योऽजीगणत्केसरिबालदन्ताँ-
स्तस्मादवाप्तोऽस्मि भुवि प्रतिष्ठाम् ॥ ४ ॥

तत्याज राज्यं कलहायमानं
ययावरण्यं रघुवंशरत्नम् ।
कालुष्यमूलं प्रसभं विपाट्य
हत्वा दशास्यं मुमुदे चिराय ॥ ५ ॥

रिङ्गत्तरङ्गं जलधिं सहेल-
मुल्लङ्घ्य बभ्राज सुवर्णपुर्याम् ।
जघान रक्षांसि ददाह लङ्कां
ध्रुवं कपीशो रिपुराशिकालः ॥ ६ ॥

क्रौञ्चस्य कारुण्यरसान्वितां गां
निशम्य शोकार्णवतामवाप ।
रामायणं यश्च चकार काव्यं
नासौ मनःप्राघुणकीकृतः किम् ॥ ७ ॥

बभाण गीतां सरसां गभीरां
जघान योऽरींश्छलनामुपेत्य ।
वृन्दावने राधिकया सहैव
विहर्तुकामो मम कृष्ण आसीत् ॥ ८ ॥

गाण्डीवबाहू रणकाण्डशौण्डः
करालकालान्तकृदाहवे यः ।
जिगाय बाह्यानपि चक्रसङ्घान्
स शक्रपुत्रो विहसंश्चकास्ति ॥ ९ ॥

व्यासर्षिणा या ननृते मयूरी
वाणी महाभारतनाम्नि कुञ्जे ।
साऽद्यापि चेतांसि विमोहयन्ती
रसं स्रवन्ती नितरां विभाति ॥ १० ॥

उट्टङ्कितानि प्रथितानि सन्ति
पुराणपृष्ठे कनकाक्षराणि ।
रहस्यविद्यालपितानि नूनं
समुल्लसन्तीह मयोद्धृतानि ॥ ११ ॥

जज्वाल बौद्धाग्निरहो मदीये
रम्ये प्रदेशे द्युतिदीपिताशः ।
चीनादिदेशेषु गताः स्फुलिङ्गा
दिवानिशं स्वप्रभया ज्वलन्ति ॥ १२ ॥

प्रधार्य विश्वं व्यसने निमग्नं
धर्मं महान्तं ललितं च तेने ।
बुद्धो महामोहतमो विभिद्य
ज्ञानोदधौ मज्जनमेव कृत्वा ॥ १३ ॥

चीनौकसः सिंहलदेशजाश्च
ब्रह्मप्रजा बौद्धरता जना ये ।
मत्तो विचारं परिपोषयन्तो
ममैव धर्मं परिपालयन्ति ॥ १४ ॥

नैजं मतं ये बहुमन्यमाना
मतं मदीयं परिवर्जयन्ति ।
चिरप्ररूढं हरिचन्दनं ते
छित्त्वा मुधा निम्बतरुं श्रयन्ते ॥ १५ ॥

धक्ष्यन्समस्तं किल नन्दवंशं
क्रोधार्चिषा नीतिविदां वरिष्ठः ।
चाणक्यनामा जनताहिताय
मुराप्रसूतिं वरयाञ्चकार ॥ १६ ॥

विपप्रथे वेपथुरन्तराये
जाते मदीये खलु चन्द्रगुप्ते ।
अजस्रमास्फालितदुर्मुखानां
तदस्त्रजालैर्व्यथिते शरीरे ॥ १७ ॥

दोधूयते यस्य यशःपताका
संसारसौधे महसा ज्वलन्ती ।
असावशोकः करुणावतारो
भूमिं मदीयां समलञ्चकार ॥ १८ ॥

जित्वा कलिङ्गं न तथा क्षितीशो
यथा नु बुद्धौ मनसा ननन्द ।
मनोऽनुकूलानि हि चेष्टितानि
प्रमोदकारीणि सदा भवन्ति ॥ १९ ॥

जिह्वाग्रभाजः खलु संप्रतीमे
नृपाः कियन्तो विलसन्ति विश्वे ।
प्रश्ने समुद्गच्छति पद्मयोनेऽ-
शोकं विशोकं नु वदिष्यसि त्वम् ॥ २० ॥

सुधाद्रवार्द्रीकृतकाव्यसूक्ती-
रास्वाद्य पाश्चात्यमनीषिवर्गः ।
भृशं तुतोषात्मनि कालिदासं
कलाधरं चाकलयाञ्चकार ॥ २१ ॥

तत्पाणिनेः सूत्रपरम्पराया
विधाननैपुण्यमहो विचिन्त्य ।
आश्चर्यचर्याञ्चित एव लोकः
संशीतिमार्गं सहसा प्रयाति ॥ २२ ॥

आनन्दवृद्ध्यै मनसश्च तृप्त्यै
प्राप्त्यै कलाधर्मनयालयस्य ।
प्राचीनकालस्य दशां मदीयां
जनास्समालोकयतायि यूयम् ॥ २३ ॥

योगीन्द्रयोगासनचाकचक्यै-
श्चक्षूंषि लोकस्य भयान्वितानि ।
शरीरिणामार्तरवानुसारं
पत्राणि वृक्षैरपि पातितानि ॥ २४ ॥

आच्छादयन्तः ककुभो मुखानि
पस्फायिरे खेऽध्वरवेश्मधूमाः ।
प्रीताश्च कामं जलदा नदन्त-
श्चकाशिरेऽलं जलदानशीलाः ॥ २५ ॥

लये पटुत्वं दधती शुकाल-
र्जगाद मन्त्रान्स्वरतः पठन्ती ।
अनाविलं घोषमुदीरयन्त्यः
कीराङ्गनाश्श्लोकचयं च पेठुः ॥ २६ ॥

साहित्यमुच्चैरधरे दधाना
श्रुतिं मुखे व्याकरणं च मूर्ध्नि ।
शास्त्रं दृशोर्ब्रह्म मनोनिधाने
गीर्वाणवाणीललना रराज ॥ २७ ॥

कीर्तिं नवां रम्यमयं च चित्र-
मनल्पदृष्टिं स्वविधीद्धबुद्धिम् ।
अरीनवन्तं च हि मां विभाव्य
विश्वं मदीयं शरणं चकाङ्क्ष ।। २८ ।।

विस्तारयामास दिने दिने मे
दिव्यामनन्तामनघां च विद्याम् ।
सुखं पठँस्तक्षशिलामठाट्टे
विद्यार्थिसार्थो धृतधर्मदण्डः ।। २९ ।।

वृक्षालवाले सलिलं सलीलं
पपौ मृगः कातरतां विहाय ।
तडिन्निभं सिंहसटासमूहं
स्वशुण्डया कर्षयति स्म नागः ।। ३० ।।

चिक्रीड चक्षुःश्रवसादरेण
समं प्रहृष्टो नकुलो वनान्ते ।
स्वहस्तलूनानि फलानि मन्ये
ददौ कपिः सोत्कतया जनेभ्यः ।। ३१ ।।

अनोकहानां मृदुपल्लवानां
हिमानिलैर्लब्धसुखा प्रजा मे ।
घ्रात्वा सुगन्धं कुसुमोदराणा-
मवाप्तकामा हृदि रज्यते स्म ।। ३२ ।।

कदापि सद्धर्मजुषो नरोऽर्कं
प्रपेदिरे नालिंपतपापपुञ्जाः ।
अनिह्नुवाना अवदातकर्म
जग्मुर्विभुं हंसमनन्यभावाः ।। ३३ ।।

शिवप्रियः पञ्चशरेऽनुरक्तो
विधौ च लुब्धः खलु सैंहिकेयः ।
सभारतो भारत एव भूत्वा
लोकः सरामो न विराम आसीत् ।। ३४ ।।

न केवलं केशवभक्तिरज्ज्वा
नारं स्वकीयां मतिमाबबन्ध ।
परं मृडप्रेमपयोधिपूरे
निमज्जयामास मनो जनौघः ॥ ३५ ॥

विकस्वरैः स्वस्मयजैर्निनादै-
रास्फोटयन्दिक्करिकर्णरन्ध्रम् ।
रणाङ्गणे कालकृपाणकृत्यै-
र्द्विषो निकृन्तंश्च जहास वीरः ॥ ३६ ॥

मधु क्वणन्तीममृतं क्षरन्ती-
मनन्तशातानि च सङ्किरन्तीम् ।
वीणां बभासे खलु वादयन्ती
महार्हहर्म्याङ्कगता महेला ॥ ३७ ॥

नदीशमालारसनापरीतो-
द्यानद्रुदुर्गच्छविभिश्च कान्ता ।
सशाद्वला मे विपुलामलेला
लक्ष्मीमपूर्वां बिभराम्बभूव ॥ ३८ ॥

यस्या गुहायास्तिमिरं प्रचण्डं
न शेकतुस्सूर्यविधू विभेत्तुम् ।
तस्यास्सचित्रास्तदिदं विजेतुं
शेकुर्द्दृषन्निर्मितभित्तयोऽपि ॥ ३९ ॥

परार्ध्यरूपाण्यतिपेशलानि
चित्राणि निर्माय मनोहराणि ।
स्रष्टुः कलालाघवमेव मोघं
चकार शङ्के किल चित्रकारः ॥ ४० ॥

साहित्यसङ्गीतकलाविलासै-
रुद्भासितं गुप्तयुगं प्रसिद्धम् ।
समाययौ स्वर्णयुगस्य नाम्ना-
ऽञ्जसा यदैतिह्यविदो वदन्ति ॥ ४१ ॥

समुद्रगुप्तोच्चरितप्रकर्षं
समाससंयुक्तपदैर्लिखन्ती ।
राराजतेऽद्यापि जयप्रशस्तिः
प्रकृष्टयागे नगरे प्रयागे ॥ ४२ ॥

निजौजसा राजकमेव दृप्तं
समुद्रगुप्तो विदलय्य युद्धे ।
राज्यं न जग्राह परन्तु कीर्तिं
कीर्त्यां हि लुब्धाः सुनृपा भवन्ति ॥ ४३ ॥

क्षीराब्धिडिण्डीरसितं यशो यो
लेभे प्रहृत्य प्रबलं शकेशम् ।
स चन्द्रगुप्तोऽभिनवैः प्रकाशैः
ध्वान्तं समस्तं प्रचयं क्षिणोति ॥ ४४ ॥

निधाय बुद्धिं प्रतिभाप्रबुद्धे
बुद्धे हरन्दुःखभरं जनस्य ।
बलं विवृण्वन्नरिचक्रवाले
हर्षो जगाहे नृपतिः प्रहर्षम् ॥ ४५ ॥

धर्मध्वजं स्थापयितुं स्वकीयं
भूतिं मदीयां प्रति साभ्यसूयः ।
अनेकशो मे शुचिभूमिपृष्ठे
वैदेशिकानां निवहः पपात ॥ ४६ ॥

परैः कृतं दुष्कृतमाधिमेव
नो केवलं मे द्विगुणीकरोति ।
परन्तु हृद्यं हृदयं विषाक्तं
विधाय कार्यं कबलीकरोति ॥ ४७ ॥

हा हा गजन्यो यवनोऽतिमूढः
स्वसेनया मे द्रविणं विलुण्ठ्य ।
मुमोच नापि स्वमदावलेपा-
त्सुवर्णमूर्तीः त्रिदशालयस्थाः ॥ ४८ ॥

ध्यात्वेतिहासस्य घृणास्पदं मे
चेखिद्यते तं मन एव कालम् ।
नष्टानि यस्मिन् रिपुचेष्टितेन
पुराणशास्त्रस्मृतिपुस्तकानि ॥ ४९ ॥

धर्मं विचारं च नयप्रचारं
शिक्षाप्रणालीं च यतो बबाधे ।
अतो निशानाथसमे स्वराज्ये
कलङ्कपङ्को यवनप्रवेशः ॥ ५० ॥

नार्योऽप्यनेकाश्श्रुतिशास्त्रविज्ञा
अपांसुला धर्मकथासु रक्ताः ।
खिन्नाननाः दुःखदशासु नापि
संख्येऽग्रगण्याश्च पुरा बभूवुः ॥ ५१ ॥

( अनुवर्ति )

# मुक्तकाञ्जलिः

श्री दि. द. बहुलीकरः

ये केचिद्वसुधां सुधोपमरसैराह्लादयन्ति स्वयं
यत्नस्तान् प्रति नीरदानिव भवेद्व्यर्थोऽयमुच्चैः स्थितान् ।
सद्वृक्षा इव तोयमल्पमपि ये गृह्णन्ति बालार्पितं
संलापं नभसा च ये विदधते तेभ्योऽयमस्त्वञ्जलिः ॥ १ ॥

एवं तत्र सुखाशनं क्व विपिने स्वातन्त्र्यमत्र क्व त-
च्छ्रेयः किं नु ममैतयोरिति मनोदोलाधिरूढः शुकः ।
भुङ्क्तेऽत्रापि फलानि पञ्जरगतां यष्टिं श्रयन्नेकत-
स्तिष्ठत्युन्नतकन्धरश्च पवनैः स्पृष्टो वनोत्कोऽन्यतः ॥ २ ॥

अन्तर्गण्डकि संस्मरन्नभिभवांस्तान् मत्स्यकूर्मादितः
पश्यन् संनतमस्तकान् युतकरानत्रार्थिनश्चाधुना ।
शीर्ष्णो द्रागवतार्य पुष्पनिचयं भक्तार्पितं गद्गदः
शालग्राम इति स्म वक्ति यदिदं तद्दैव्यवस्थेऽस्तु ते ॥ ३ ॥

पूर्वं चात्मविसृष्टमङ्गकवचं हृत्वा द्विजच्छद्मना
प्रच्छन्नं भुवि चागिलद् रणमुखे दैवं रथाङ्गं बलात् ।
"स्वायत्तं निजपौरुषं यदि तव क्वैतद् गतं साम्प्रतं ?"
दैवेनेति विडम्बितोऽङ्गनृपतिः स्वोक्तं पुनः स्मारितः ॥ ४ ॥

जानीमो न वयं सुखं स्वपिति वा नैवाथवा श्रद्धया
श्रद्धालुः सुलभाश्रुभिस्त्वहरहर्नेत्रे प्रमार्ष्टुं क्षमः ।
नैवाश्रद्धजनाक्षिपक्ष्मपटले निद्रापि सन्तिष्ठते
कष्टं ! नापि तदीयदर्शनपथो बाष्पाम्बुभिर्मृज्यते ॥ ५ ॥

वैरूप्यं प्रतिमागतं किमिति यो नित्योपहासास्पदं
तिष्ठन् केलिवनान्तिकेऽपि च सदा प्राप्नोपि यः कण्टकान् ।
धन्वाध्वक्रमणे क्रमेलक नृभिस्त्वं सोऽधुना स्मर्यसे
साकं गच्छसि तादृशैरवहितं रक्षोदरस्थं जलम् ॥ ६ ॥

भ्रातर्वारिकणार्थमुन्नतमुखो धिक्, चातक, प्रेक्षसे
मन्ये नीतिरियं कदापि भवता नालोकिता लौकिकी ।
पश्यैतन्नयवेदिसारसबकैराविष्कृतं पाटवं
येनैवं विहरन्ति नित्यविनतग्रीवाश्चिरं वारिषु ॥ ७ ॥

"न त्वं मामपि नाम यद्गणयसे दृप्ते, तदेतत्फलं
प्राप्नोषी"ति शपन्मुनिर्मुनिसुताभाग्यानि धक्ष्यन्नितः ।
तिष्ठत्यत्र शकुन्तलानवहिता नाप्यालयः संनिधौ
जानीते न च कोऽपि शापवचनं, तन्मुक्त्युपायं कुतः ॥ ८ ॥

निर्घोषः शिवचापभङ्गजनितो द्यावापृथिव्योश्चर-
न्नुच्चैर्घोषयतीव डिण्डिमरवो यद्भार्गवोऽस्तं गतः ।
स्वीकृत्याभिभवं स्वविक्रममिव स्वांशात्पुरोवर्तिनः
शीतोष्णाश्रुभिराकुलो भृगुपतिर्माहेन्द्रमार्गं श्रितः ॥ ९ ॥

कश्चिन्मज्जति वारिषु स्थलधिया निःशङ्कमङ्घ्रिं क्षिपन्
कश्चित्तोयभिया सशङ्कचरणः सोपानतो भ्रंशते ।
मायित्वं प्रवयःपितामहकरादेतत्क सम्भाव्यते
सृष्टिं कोऽपि मयो व्यधाद् विदुरिमां मायेति तस्माद्बुधाः ॥ १० ॥

भूमौ स्वाद्भुतकर्मनिर्वृतमनाः शेते मुनिः स्वाश्रमे
यत्नो वासवकुण्ठितो द्युगमने बृन्दारकैर्हस्यते ।
तिष्ठन्सानुशयस्त्रिशङ्कुरुभयभ्रष्टोऽन्तरा रोदसी
स्वर्गं निन्दति कौशिकं च शपते सेर्ष्यं धरां वीक्षते ॥ ११ ॥

मेघैरावृतमम्बरं क्षितितलं श्यामं प्रनष्टा दिशः
पङ्केनाकुलितं वनं कटु रटत्येतच्च भेकीकुलम् ।
ईदृग्दुर्दिनकाल एव शिखिनां कस्मात्स नृत्योत्सवो
(नूनं)तैरचिरांशुदर्शमचिरात्तन्नृत्यमभ्यस्यते ॥ १२ ॥

केचित्ते वसुदेवमन्दिरधियः कारागृहं प्रापिता
अन्ये केऽपि यशोदया युतकरा बद्धाश्च दाम्नोदरे ।
व्याधिव्याधशरव्यताधिगमिता कैरप्युपद्वारकं
तृष्णे, कृष्णचरित्रमावहसि किं त्वल्लम्पटोद्वेगिनि ॥ १३ ॥

एते प्राञ्जलयः पुरोऽस्य सहसा बध्नन्ति मुष्टिं रुषा
स्रग्भाराश्च पुरस्कृता झटिति किं लोष्टाश्मभावं गताः ।
सर्वे तेऽपि त एव सोऽपि न परः कस्मात्त्ववस्थान्तरं
केनाप्यत्र नरो दुरोदर इव प्रायोऽक्षवत्क्षिप्यते ॥ १४ ॥

कांश्चित्प्रापयतेऽनिशं क्षितिभृतां सामर्षतेवापदं
कांश्चिद्धावयते हयानिव कशाघातैः स्फुटद्वक्षसः ।
कांश्चिच्चालयतेऽतिवत्सलतया मातेव धृत्वा करं
रथ्यैका प्रतियात्रिकं पृथगहो, रूपान्तरैर्जृम्भते ॥ १५ ॥

श्रीरेषा मदकारिणी भगवतो विष्णोः प्रिया मे स्वसा
देवेन्द्रो बहु मन्यते मदमुचामग्रेसरं भ्रातरम् ।
सर्वं चैव मदोत्कटस्य वशगं कृत्वेति वाभ्यन्तरे
ध्मातोऽप्यत्र स शङ्ख एव कुरुते कष्टेन भिक्षाटनम् ॥ १६ ॥

"एषा गर्ह्यते सुतापरिभवक्लिष्टा धरा कम्पिता
वैदेहीं जहतोऽद्य भीतमिव किं धर्मासनं वेपते" ।
इत्थं चेतसि चिन्तयन् प्रतिपदं बाष्पाकुलत्वात्स्खलन्
प्राकाश्ये विषमां निनिन्द पदवीं सौंहासनीं भूपतिः ॥ १७ ॥

वैदेहीं पुरतो वने च युगपत्पश्यन्मनश्चक्षुषा
शृण्वंस्तानि वचोऽमृतानि च समं तत्क्रन्दितैः कानने ।
पाणिभ्यामपिधाय कर्णनयनं वामां स्मृतिं दूषयन्
रामः शृङ्खलयेव बद्धचरणो गच्छत्यगच्छन्निव ॥ १८ ॥

अर्थं संस्मरणानुमेयमधुना स्वप्ने समासादितं
मूढो याति दिवापि शून्यमनसा नष्टं विचिन्वन्निव ।
कश्चिन्मूढतरो विकल्पनिगडैः कष्टं पदं न्यस्य ते
मा गाद्धस्तगतः कथञ्चिदिति च भ्रान्त्या वृथाऽऽयस्यति ॥ १९ ॥

दत्त्वा ते निजयौवनं चिरमगात्पुत्रोऽपि ते वार्द्धकं
रुष्टा चाश्रमलङ्घनाद्वसुमती भूपं नवं वाञ्छति ।
भूयो भूय इति प्रजाभिरनुरुध्यान्त्यं व्रतं स्मारितः
कष्टं याति ययातिराश्रमपदं प्रासादबद्धेक्षणः ॥ २० ॥

"सोदर्ये"ति शिवालये पशुपतावाभाषिते नन्दिना
"भुङ्क्ष्वौद्धत्यफलं शिला भव जडे" त्याकर्णिता शापवाक् ।
उक्षा मीलितलोचनो विहसतीवैतत्स नीचैर्वदन्
"ग्रावा लब्धमहापदो विधिवशाद् ग्रावाणमास्कन्दति" ॥ २१ ॥

ये नः शासति भक्तिमार्गमपि तान् धाष्ट्र्यादिव ब्रूमहे
भक्तिश्चेत्स्तुतिरेव चञ्चलफला, सा दूरतस्तिष्ठतु ।
यद्येते द्वितयेऽपि तुष्टमनसो मर्त्याः सुराश्च स्तवैः
किं तेषां वदतान्तरं, न च कथं रोषेऽपि ते स्युः समाः ॥ २२ ॥

ग्रावंश्चेत्तव चेतनागुणकणो नैतत्सहस्वाधुना
स्वस्मिन्धूर्तजनैस्तथाज्ञनिवहैर्देवत्वमारोपितम् ।
कष्टा स्रङ्निगडैर्न केवलमसौ बन्दिस्थितिर्मन्दिरे
मिथ्यागौरवतोऽर्थवञ्चकपदं स्वात्मापि तु प्राप्यते ॥ २३ ॥

"पन्था नैव तवैष," "गच्छ परतो", "मार्गान्तरं श्रीयता"—
मेवं क्षिप्तनिवर्तितः प्रतिपथं सोऽन्धो यथा कन्दुकः ।
अश्रौषीद्वचनं "नने"ति बहुशोऽयासीत्पुनश्चत्वरं
यत्रासीच्च पुरास्ति तत्र कतिधा गत्वापि सर्वा दिशः ॥ २४ ॥

अन्वेष्टुं शाश्वतार्थान् समधिगतवरो यः स्वयात्राप्रवृत्तो
भूयो भूयः स चिन्तामणिविचयपरो वञ्चितो ग्रावखण्डैः ।
दर्शं दर्शं च कालं तरलमतितरां नैव पश्यन्निवैति
पाराशर्योऽधुनैवं स्ववरपरिणतौ शापशङ्कां दधाति ॥ २५ ॥

# भोः कवे !

डा० वे. राघवः

वंशोऽसि यत्सुषिरवेशनकार्मणेन
रथ्यावृथाऽत्यपवमानपृथग्जनोऽयम् ।
निष्पन्दिताहि कृतमेघ-मुदश्रु-वर्षम
उद्धर्षितद्रु बत राग-महत्त्वमेति ॥ १ ॥

चन्द्रोऽसि यं समनुविश्य विनिस्सरन्तः
चण्डद्युतेर्भुवनघस्मरभानवोऽमी ।
सौधाङ्कुरन्ति, विकिरन्ति हिमं, मनांसि
दुग्धाब्धिलोललहरीषु च लालयन्ति ॥ २ ॥

चिन्तामणिस्त्वमसि केवलसङ्गतस्त्वं
कालायसं विपरिवर्तयसि क्षणेन ।
विश्वादृताभरणहेमतया, ततोऽपि
दिग्वीचिलं परिमलं च तनोषि तत्र ॥ ३ ॥

त्वं सुन्दरी किसलयारुणकोमलस्य
पादस्य ते ललितताडनलीलयायम् ।
स्थाणुः प्रणृत्यति महेन मरन्दतिम्य-
दुत्सौरभप्रविकसत्प्रसवाट्टहासः ॥ ४ ॥

त्वन्मायया सुरभिलानि मुखानि पुष्पा-
ण्युन्मील्य सन्दधति काकलिवैदुषीं च ।
त्वां वीक्ष्य शर्करिलभूषु शरत्सरित्सा
साहित्यभङ्गिभिरुपांशु करोति गोष्ठीम् ॥ ५ ॥

साम्राज्यमेतदयि तेऽत्र कदा लभेय
त्वय्येव गन्धपवने शयितस्सदा स्याम् ।
पद्माटवीषु तव, ते शशिमण्डलेषु
माद्यन्मनाः बत चरिष्णुरहर्निशं स्याम ? ॥ ६ ॥

# कविः, ज्ञानी, ऋषिः

डा० वे. राघवः

रथ्याचरजनौघेन व्रजन्नप्यव्रजन्निव ।
वितर्दिकायामासीन इव रथ्यां स पश्यति ॥ १ ॥

वहन्नपि स्वयं नद्याः प्रवाहेणावहन्निव ।
असौ तिष्ठन्निव तटे भाति स्रोतो निरूपयन् ॥ २ ॥

इह पृथ्व्यास्तलेऽधस्तात् सह सर्वैश्चरन्नपि ।
शिखरादिव सौधस्य पृथिवीं पर्यवेक्षते ॥ ३ ॥

मूर्तीकृत्याप्यरूपाणि धृत्वामलकवत् करे ।
असौ परीक्षते ध्यायन् सत्तां दत्वाऽसतामपि ॥ ४ ॥

भवन्तं विषयं भावितुल्यं संकृष्य पश्यति ।
भवत्कृत्य च भूतानि समाकर्षति दृक्पुरः ॥ ५ ॥

मुक्ताफलानि कीर्णानि यत्र लोकोऽवलोकते ।
तत्रासौ वीक्षते सूत्रं सूत्रितां मालिकामपि ॥ ६ ॥

असौ सूच्येव दोषेण तथाऽलक्ष्म्या च विध्यते ।
वह्निनेव गुणेनासौ लक्ष्म्या च बत दीप्यते ॥ ७ ॥

तस्यैव वर्तते प्रेक्षा चेतस्तस्यैव वर्तते ।
प्रेक्षावांश्च सचेताश्च कविर्ज्ञानी ऋषिश्च सः ॥ ८ ॥

## वृक्षाः

विद्युल्लेखा वाघ

अवसिता मन्त्रसंस्कृतिः । अवतीर्णा चेयं यन्त्रसंस्कृतिः । यन्त्रारूढाः सततं पुरः प्रधावन्तः वयं न लभामहे क्षणमपि निश्चलं स्थातुं, प्रतिपलं नवनवैः विलासैः नेत्रनिर्वाणं जनयन्तीं प्रकृतिम् अवलोकयितुम् । साङ्ख्यानां पुरुष इव दृक्शक्तिसम्पन्ना अपि उदासीना अकर्तारो ननु वयम् । प्रकृतिसङ्गीतं तु रसिकनिरपेक्षं सन्ततं प्रवृत्तम् । प्रकृतिवैतालिकाश्च वृक्षाः सखेदम् आक्रोशन्ति—"ऊर्ध्वबाहुर्विरौम्यैष न च कश्चित् शृणोति माम् ।"

न पुनरहं शक्नोमि गृहमवलम्बितुम् । यदा यदा आकर्णयामि आवाहनं वृक्षाणां, तदा तदा मन्त्रमुग्धा इव अहं सकलमपि उत्सृज्य वृक्षं वृक्षम् उपैमि, प्रकामं तम् अवलोकयामि, तेन सह आलपामि च ।

वृक्षेषु अपि पिण्डे पिण्डे भिन्ना एव आकृतिः प्रकृतिश्च । प्रतिवृक्षं नव एव पर्णवर्णः, अप्रतिमश्च सुमसम्भरः । इयं श्वेतचम्पकयष्टिः, प्राप्ते निदाघसमये, पञ्चाग्निसाधनम् आचरन्तीव पार्वती, सितकुसुमैः प्रज्वलति । किंशुकश्चायं जीर्णारण्ये प्रदीप्ताः पावकशिखा एव उत्तमाङ्गे धारयन् रक्तांशुरिव प्रतिभाति । इतः प्रत्यवयवं काञ्चनालङ्करणैः विभूषितः लक्ष्मीधर इव अयं पीतपुष्पैः विराजमानः काञ्चनतरुः, इतश्च आरक्तपल्लवकरान् नर्तयन्ती किशोरी रक्तपर्णी ।

न केवलं पुष्पाणि, अपि तु फलानि अपि वृक्षान् अलङ्कुर्वन्ति । फलभारेण नतमस्तकाः वृक्षाः ज्ञानभारेण विनयनम्राः विदग्धाश्च सुजन-सरणीमनुसरन्ति । यद्यपि पत्रं पुष्पं फलं च इति एतत् सर्वं वृक्षाणां भूषार्थमेव, तथापि निष्पर्णानाम् अपि शाखिनां पुष्णाति एव किमपि अव्याजमनोहरत्वम् । नीलाकाशफलके शाखामात्रेण एव विराजमानं करुण-सुभगं रेखाचित्रं हि तत् । सर्वसङ्गपरित्यक्तं विरक्तं मुण्डकमेव अनुकरोति एतादृशः निष्पर्णतरुः । तमवलोक्य कोऽपि व्याहरेत्—"शुष्कं काष्ठं तिष्ठत्यग्रे!" तदन्यश्च ब्रूयात्—"नीरसतरुरिह विलसति पुरतः!" एक एव वृक्षः विविधान् भावान् हृदि जनयितुम् ईश्वरः । अहं च स्मरामि एतादृशं वृक्षं विलोक्य, मखजेन अकिञ्चनत्वेन विराजमानं राजानं रघुं वा, याचकैः परिशोषितं सार्थवाहं चारुदत्तं वा ।

स्यात् कामपि जीवनावस्थामुपारूढः वृक्षः, सः मम स्नेहभाजनमेव जायते। करकिसलयं विधूय बालतरुः आह्वयति माम् । गगनगामी शाखी दुर्दमनीयां महत्वाकाङ्क्षां मद्-हृदये समुत्पादयति। निष्पक्षिकं कोटरं स्कन्धे वहन् शुष्कवृक्षः स्मारयति माम् अवितथं विद्वद्वचनं—"कृशे कस्यास्ति सौहृदम्?" परं छिन्नोऽपि पुनर्जायमानः तरुः निर्विण्णम् अपि चित्तं पुनः सोत्साहं सम्पादयति। यत्रस्थानां पतत्रिणां पाठशालाकोलाहलः दूरादपि कर्णपथम् आयाति, सोऽयं पिप्पलः पुनरपि प्रबोधयति स्मृतिशेषाणि शैशवदिनानि। तथा च तिमिरावगुण्ठिते संसारे, सुप्तेषु सर्वेषु, यदा पश्यामि कमपि निष्कम्पवृक्षं, तत्क्षणम् एव हृदि प्रस्फुरति काचन अनिर्वचनीया शान्तिः, विश्रब्धं भवति मानसम्।

मन्ये मनुजस्य हृदि स्थितं प्रसुप्तं तत्त्वचिन्तकं वृक्षा एव प्रबोधयन्ति, तं च मुखरीकुर्वन्ति। प्रतिपर्णं लिखितं प्रकृतिसन्देशं प्रत्यक्षीकृत्य पुरा कस्यापि क्रान्तदर्शिनः जीवनानुभवः श्लोकत्वम् आगत इति प्रथितमेव। धन्या खलु सा पुराणकवेः सूक्ष्मदर्शिता या अश्वत्थवृक्षे संसारतरोः प्रतिबिम्बं पश्यन्ती उवाच—

"ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।"

"ममैव जन्मान्तरपातकानां

विपाकविस्फूर्जथुरप्रसह्यः"

अशोकः अकलूजकरः

योो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
न चाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः ॥

न जाने कीदृशं तत् दिनम् आसीत् । तस्मिन् हि दुर्दिने आलस्य-प्रियस्य साङ्ख्यस्य पुरुषः "आराम हराम है" इति नेहरूक्तेः किञ्चित् कर्म कर्तुम् उद्यतः, प्राचीनैः संस्कृतकविभिः प्रत्येकं स्त्री तन्वी श्यामा शिखरिदशना नास्ति इति ज्ञातं, मीमांसकेन वेदे हुम्फडादिमन्त्रे कस्मिंश्चित् रेफांशे आनर्थक्यम् अस्ति इति उक्तं, नैयायिकः पर्वतगते अग्नौ न पतितः, अहं च संस्कृतनाटकविषयिणीं भाषणमालाम् आयोजयितुं प्रवृत्तः ।

वस्तुतः अहं नाम अतीव सरलः जनः । कर्तव्यं कर्म कर्तव्यम्, अन्यत् न लक्ष्यम् इति एव मे जीवितसूत्रम् । गते वार्षिके स्नेहसंमिलने[1] सत्याम् अपि कन्यानाम् उपस्थितौ, अहं नाटकानि एव द्रष्टुं गतः । अद्य यावत् कदापि नास्ति मया नगरमार्गे दक्षिणेन पार्श्वेन चलितम् । तथा च महा-विद्यालयीने अपि गते वर्षचतुष्टये न अहं स्वसमीपतः गच्छन्तीम् अपि सुन्दरीं लक्षितवान्, किमङ्ग पुनः परेण पदपथेन[2] गच्छन्तीम्? संक्षेपतः अहम् एकः सरलतमः जनः । निखिले अपि महाविद्यालयपङ्के अहम् एव एकं निष्कलङ्कं पङ्कजम् ।

किन्तु केन खलु पिशाचेन अहं तदा आविष्टः, न जाने । मया आत्मनः भाषणायोजकत्वं निश्चितम् इति तावत् सुनिश्चितम् । अयं वा, कः प्रमादः अत्र मया चरितः? रघुपतिः अपि विनाशकाले विपरीतां बुद्धिम् अदर्शयत् । का तर्हि कथा मादृशस्य अपतेः?

अतीव कोमलबुद्धयः भवन्तः पुरुषपुङ्गवाः । तस्मात् न इदानीं भवदुत्कण्ठाम् अति श्रामयामि । यथा वृत्तं तथा कथयामि । इत्थं हि तत् सर्वं संवृत्तम् ।

---

१. Annual social gathering.

२. Foot-path.

पिशाचावेशवशात् वा, विपरीतबुद्धिवशात् वा (विपरीतबुद्धि-पिशाचवशात् वा) स्वीकृतभाषणायोजकत्वः अयं जनः संमतिलाभार्थं प्रथमं स्वमहाविद्यालयस्थान् प्राध्यापकान् द्रष्टुं प्रष्टुं च गतः । प्राध्यापकवर्याः तदानीं प्राध्यापकप्रकोष्ठस्य[३] अन्तः कॉफीं[४] पिबन्तः, "अद्य कॉफीकर्त्रा सेवकेन चहायां[५] कॉफी मिश्रिता, उत कॉफ्यां चहा" इति मीमांसमानाः स्वसहकारिभिः (यथा तर्कितम्) उच्चैः विवादं कुर्वाणाः आसन् । कॉफीपानानन्तरं ते बहिः आगताः । अहं तेषां समीपं गतः, उक्तवान् च "गुरुवर्याः, संस्कृतनाटकविषयिणी काचन भाषणमाला अस्माकं महाविद्यालये घटताम् इति अस्ति मे कश्चित् कल्पः । भवन्तः अत्र किं मन्यन्ते ?"

"नैव सम्प्रति दृश्यते स्वतन्त्रं चिन्तनं प्राध्यापकानाम् । केवलं द्वित्राः एव प्राध्यापकाः यत् अध्ययनार्थं नियुक्तेषु ग्रन्थेषु न दृश्यते तत् प्रतिपादयन्ति । अन्ये पुनः केवलम् अन्यैः लिखितं रटन्ति । गुणैः चहा कॉफीतः गरीयसी इति एव वदन्ति ।"

"परं गुरुवर्याः, अपि अस्माकं महाविद्यालये घटताम् इयं संस्कृत-नाटकविषयिणी भाषणमाला ?"

केन मूर्खेण कथितं चहायां कॉफ्या अपेक्षया स्वल्पं टॅनिन्द्रव्यं वर्तते इति । अहं तु चहा एव टॅनिन्पूर्णा, कॉफी तु केवलं टॅनिन्स्पृष्टा एव वदामि ।"

"किन्तु गुरुवर्याः, अपि आयोजनीया अस्माभिः इयं सरसा भाषणमाला ?"

---

३. Common Room for Professors.

४. केचन आङ्ग्लभाषाशब्दाः इदानीं संस्कृते दुर्निवारप्रवेशाः । तेषां हि समीचीनः उच्चारः भवतु इति कृत्वा देवनागरीलिप्याम् अपि स्वल्पं परिवर्तनम् आवश्यकम् । अत्र ॲ-ऑ-इत्यादिस्वरसमावेशः अनया एव बुद्ध्या कृतः । सा एव लिपिः श्रेष्ठा या सूचनीयभाषागतान् अधिकतमान् ध्वनीन् द्योतयति ।

५. महाराष्ट्रे 'Tea' इत्यस्य पर्यायी शब्दः 'चहा' इति उपयुज्यते ।

"भाषणमाला ? हां, हां ! [६]अवश्यम् आयोजनीया, अवश्यम् आयोजनीया । अद्यापि न सन्ति केनापि आहूताः वक्तृवर्याः रसान् अधिकृत्य वक्तुम् । वयं तत् कुर्मः । अस्यां भाषणमालायां मधुरादीन् आश्रित्य प्रत्येकम् एकम् इति षड् भाषणानि, 'कॉफीचहयोः वास्तवी रुचिः, तयोः च तुलना' इति च एकम्, इति सप्त भाषणानि भवेयुः । गच्छ ! आयोजय वक्तॄन् ।"

"गुरुवर्याः, क्षम्यताम् । मद्वचने किञ्चित् भ्रान्ताः भवन्तः । न अहम् अन्नरसविषयिणी भाषणमाला आयोजनीया इति वदामि । संस्कृत-नाटकविषयिणी सुरसा भाषणमाला भवतु इति मे अभिप्रायः ।"

"अरे तेन किम् ? भवतु 'संस्कृतनाटकगताः षड् रसाः' इति भाषणमालाविषयः ।"

"परं गुरुवर्याः, तथा कृते प्रत्येकं भाषणं केवलं पञ्चसु एव निमिषेषु समाप्तिं यायात् । यावत् ज्ञातसमयमाहात्म्याः (?) अस्माकं श्रोतारः सभागृहं प्रविशन्ति तावत् एव भाषितृमहोदयैः कॉफीपानप्रसङ्गः प्राप्नुयात् । न वर्तते संस्कृतनाटकेषु विदूषकभाषणेषु अपि अन्नरसविषयिणी सविस्तरा चर्चा ।"

"भवतु । यथा ते इच्छा तथा क्रियताम् । अस्ति मे भाषणमालायाः आयोजने सम्मतिः ।"

प्रत्यागतः अहं प्राध्यापकप्रकोष्ठात् तस्मिन् नोव्हेम्बरमासीये प्रभातकाले भालप्रदेशगतान् घर्मबिन्दून् करेण आक्षिपन् प्राप्तपूर्ण-स्वातन्त्र्यः च प्रवृत्तः वक्तॄणाम् आयोजने । प्रथमं प्राध्यापिकायाः सौभाग्यवत्याः शान्तिब्रह्ममहोदयायाः गृहं प्रविष्टवान् । (नहि नहि, प्रमादः, महान् प्रमादः !

---

६. हां, हं, अं, इत्येते मराठीभाषागताः निपाताः अत्र लेखे प्रयुक्ताः, तेषाम् अर्थाः सन्दर्भेण एव सपदि ज्ञाताः भवेयुः । अतः केवलम् इदम् एव निर्दिश्यते यत् तेषाम् उच्चारणं हाम्, हम्, अम् इति मकारान्तं न भवति । तेषु अनुस्वारः वर्तते अतीव स्वल्पः ।

प्रवेष्टुं प्रयतितवान् इति वक्तव्यम्!) अयं विद्यामात्रव्यसनो वराकः यावत् गृहद्वारं स्पृशति तावत् एव गृहान्तात् पोलिका[७]पीठं, पोलिकादण्डः, विविधानि च विदूषकदेहवक्राणि पात्राणि मह्यं प्रत्युदगच्छन् । तेन "अलम् अनेन भाषणायोजनेन यत्र जीवितम् अपि संशये न्यस्यते" इति प्रादुर्भूतः विचारः मम मनसि । परं न स चिरं स्थितवान् । श्रूयते हि "आनन्दं भाषणे विद्वान् न बिभेति कुतश्चन" इति । अथ गृहं प्रवेष्टुकामस्य 'नान्यः पन्थाः विद्यते अयनाय' इति दृष्ट्वा, विरलतरम् अधुना महानसपात्रवर्षम् इति च आलोच्य, अहं देहल्याम् एव स्थित्वा, पूर्वकायं नमयित्वा, गृहस्य अन्तः दृष्टिं निक्षिप्तवान् । प्राध्यापिकापतिराजाः काष्ठासनस्थाः स्वशिरसि धृतच्छत्राः एकाग्रेण मनसा कवितां लिखन्तः मया तत्र दृष्टाः । वर्णितं हि केनापि नवकविना—"चित्रं कान्ता भृशं क्रुद्धा कान्तः शान्तस्तथापि सः । तस्यास्तु पात्रवर्षं तत् तस्य तु च्छत्रधारिता ॥" इति । ततश्च 'एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता । भाजनं भार्यया क्षिप्तं पतिं हन्ति सपुस्तकम् ॥' इति इमां सूक्तिम् एतान् ज्ञापयामि इति क्षणं यावत् अहम् अचिन्तयम् ' । परं महानसात् आगतानि अस्त्राणि केवलम् एतेषां छत्रं परिचुम्ब्य सफलम् इव स्वजन्म मन्वानानि भूमिं श्रयन्ति इति दृष्ट्वा, अयं च महाभागः तत्र सचक्षुः अचक्षुः इव, सकर्णः अकर्णः इव, समनाः अमनाः इव स्थितः इति च आलोच्य गीर्णवान् अहम् इदं चिन्तनम् । अथ रिक्तीभूते महानसे आरब्धम् अनन्यास्त्रेण शत्रुणा वाग्युद्धम् "अहो आलस्यम् आर्यपुत्रस्य, सर्वस्मिन् अपि कार्ये मया श्रमः निधेयः, अनेन च विश्रमः विधेयः" इत्यादिकं किमपि किमपि, यत् सर्वत्र प्रथिततमम् । अत्र तावत् 'रणे अभिमुखः हतः स्वर्गं लभते' इति स्मरता समयव्ययपरिजिहीर्षुणा मया स्पृष्टा द्वारस्था सन्देशकिङ्किणी[८] । तस्याः निनादेन सर्वम् अपि गृहम् एकपदे शान्तिम् अगच्छत् । अन्तर्गृहात् प्राध्यापिकामहोदयाः बहिः आगताः । "अहो अपावृतम् एव एतत् (स्वर्ग-) द्वारम् , निःसङ्कोचं प्रविशन्तु भवन्तः" इति च नमस्कुर्वाणं मां सानन्दम् अन्तः आहूतवत्यः । प्राध्यापिकामहोदयानां नियतिकृतनियमरहिता तनुः 'यतो वाचो निवर्तन्ते अप्राप्य

७. पोलिका = चपाती.

८. Call-bell.

मनसा सह' इत्येतावती पीना आसीत्। ताः महानसीयैः अस्त्रैः अनलङ्कृतम् एकम् आसनं महता प्रयत्नेन अन्विष्य मह्यं दत्तवत्यः। अन्वेषणकाले "अतीव चपलः मे पुत्रः, अतीव चपलः, सर्वम् अपि अन्तर्गतं वस्तुजातं स इतस्ततः करोति" इति ताभिः बहुवारम् उच्चरितं, मया च "अपि कश्चन बालकः एतावन्ति एतादृशि च भीमगदासदृशानि पात्राणि चालयितुं समर्थः स्यात्" इति चिन्तितम्। मम चिन्तनपूर्तेः प्राक् एव प्राध्यापिकाभिः आसनं लब्धम्। अतः तत्र उपविश्य "यथा यथा भवेत् पुंसां भाषणे सज्जता द्रुतम्। सा सैव प्रक्रिया साध्वी विपरीता ततोऽन्यथा ॥" इति गुरूपदेशं स्मृत्वा, स्वरे मार्दवस्य स्नेहस्य आदरस्य च घटशतं रिक्तीकृत्य अहम् उक्तवान् "मान्याः, अग्रिमे मासे अन्तिमे सप्ताहे अस्ति अस्माभिः आयोजिता संस्कृतनाटकविषयिणी एका भाषणमाला। समावेशितानि तस्याम् उत्तररामचरितं, शाकुन्तलं, मृच्छकटिकं, मुद्राराक्षसं, रत्नावली, स्वप्नवासवदत्तं, वेणीसंहारं च इति सप्त नाटकानि। तत्र वेणीसंहारम् अधिकृत्य कृपया भाष्यतां भवतीभिः इति नम्रं मे विज्ञापनम्। अवश्यं पूरणीया इयं मे प्रार्थना।"

"किं वेणीसंहारम् अधिकृत्य? भवतु, भाषिष्ये, अवश्यं भाषिष्ये।"

"अनुगृहीतः, अतीव अनुगृहीतः अयं जनः। अथ पुनः एकश आगत्य ज्ञापयामि निश्चितां भाषणवेलां भवतीः।"

"अस्तु, तथा एव अस्तु।"

विस्मितः स्तिमितः आश्चर्यभूतः अभवम् अहम्। यासां भाषण-चातुर्यविषये तादृशी कीर्तिः नास्ति यादृशी भाषणनिमन्त्रणस्य अस्वीकारविषये तासु शान्तिब्रह्ममहोदयाः जनैः गण्यन्ते। परं ताभिः अपि मम इदं निमन्त्रणं झटिति स्वीकृतम्। अहो आश्चर्यम्! अर्थात् स्पष्टम् एव तत्र तासां गृहसंहारः कारणम् आसीत्। तस्मात् संहारक्षेत्रात् शीघ्रातिशीघ्रं मम निर्गमनम् इच्छन्ति स्म प्राध्यापिकामहोदयाः। परं भवतु नाम। किं कारणमीमांसया? निर्वर्तितं स्वकार्यम्। किं सम्प्रति परगृहचिन्तया? प्राध्यापिकागृहे धर्मवेणीभूता पत्नी संहरतु अथ वा कुलवेणीभूतः पुत्रः संहरतु। वयं तावत् "अस्तु, तथा एव अस्तु" इति सन्देशकिङ्किणीनिनादमधुरैः शब्दैः एव प्रमोदामहे। अथ केचन दुर्जनाः इमं मम वृत्तान्तं श्रुत्वा, खें खें

इति कृत्वा "तासां प्राध्यापिकामहोदयानां पुत्र एव नास्ति" इति वदिष्यन्ति । परं कामं ते तथा वदन्तु । कः खलु लोकम् आराधयितुं समर्थः ? अपि च किं प्रजया करिष्यामः येषां नः इदम् आयोजनम्, इदं भाषणम् ?

शान्तिब्रह्मप्राप्त्या द्विगुणितोत्साहः अहं सडोलीकरमहोदयान् साक्षात् कर्तुं गतः । ते न सन्ति संस्कृतस्य वा अन्यस्य वा विषयस्य प्राध्यापकाः । परम् अधीतसंस्कृताः ते बहु प्रसिद्धाः किल रसिकत्वेन । प्रथमं प्रयत्नपञ्चकं विफलम् अभूत् । एकदा रसिकवर्याः माध्याह्नस्वापम् आस्वादयन्तः, अन्यदा क्रीडापत्रैः[९] आत्मानं रमयन्तः, कदाचित् चलच्चित्रं[१०] द्रष्टुं गताः, कदापि क्रीडासमाजे[११] चहापानव्यग्राः, कदाचन च यष्टिकन्दुके[१२] रताः आसन् । मम षष्ठम् अभियानं तु तेषाम् इदम् उद्योगदुर्गम् अभिनत् । अन्ततो गत्वा आगतः मम दृष्टिपथं तेषां मुखचन्द्रः । यथापूर्वं प्रास्ताविकं कृत्वा विज्ञापिताः ते मया मुद्राराक्षसम् अधिकृत्य भाषितुम् । उक्तवति एव मयि एवं, [१३]पञ्चमचञ्चवः तत्रभवन्तः तमाखुरसशोभि स्वमुखं चर्वणात् रश्मिषु इव आदाय न्यवर्तयन्, भ्रूभङ्गेन शकुन्तलाम् अलज्जयन्, जले निमज्जन् जनः यथा मुखं विधुनोति तथा मुखं विधूय माम् अवदन् च "मौड्राराक्शशं णाशि मम अभिमटं णाटकम् । यडि भाशिश्ये टर्हि वेणीशंहारम् एव अढिकृट्य भाशिश्ये ।"

"परं . . . . परं माण्याः अश्टि श्वीकुटं शाण्टिब्रह्ममहोडयाभिः टं णाटकम् अढिकृट्य भाशिटुम् ।"—अहम् अपि अनवधानात् (भारतस्य

९. Playing Cards.

१०. Movie.

११. Club.

१२. Cricket.

१३. नागवल्लीदलं चूर्णं सारः पूगीफलं तथा ।
साधनानां मता ह्येषा ताम्बूलस्य चतुष्टयी ॥
तमाखुः पञ्चमश्चात्र केषाञ्चन तु विद्यते ।
अतस्तं पञ्चमं प्राहुः पञ्चमज्ञा मनीषिणः ॥

भावनिकम् ऐश्वर्यं वर्धताम् इति हेतोः च) रसिकवर्याणाम् एव स-'रस'-वाण्या अवदम् ।

"भवदु । टर्हि न भाशिश्ये । भाशण्टां शाण्टिब्रह्ममहोडयाः ।"

"न, मान्याः, न । मा तथा भवतु । भवन्तः शान्तिब्रह्ममहोदयाः च इति उभौ अपि भाषितृत्वेन इष्टौ अस्माकम् । न भवतां त्यागाय सिद्धाः वयम् । कः खलु 'एरण्डः मे क्षेत्रे वर्तते' इति वर्धमानम् आम्रवृक्षं छिन्द्यात् ? यदि भवन्तः स्वीकरिष्यन्ति इदं निमन्त्रणं तर्हि एव भविष्यति इयं भाषणमाला । इहासने शुष्यतु मे शरीरं त्वगस्थिमांसं विलयं च यातु । अप्राप्य युष्मान् बहुलोकवाञ्छितान् न ह्यासनाद् गात्रमिदं चलिष्यति ।। न त्वहं कामये राज्यं न स्वर्गं नापुनर्भवम् । कामये रससिक्ताया भवद्वाण्यास्तु वर्षणम् ।। यदि भवद्भ्यः मुद्राराक्षसं न रोचते तर्हि शाकुन्तलं वा रत्नावलीं वा स्वीकुर्वन्तु भवन्तः ।"

"हं...., एवं....एवं वडटि टर्हि भवान् । भवदु । भाशिश्ये यठाशाक्टि रट्णावळिम् अढिक्रुत्य ।"

"अनुगृहीतः अस्मि मान्याः, महत् अनुगृहीतः अस्मि ।"

प्रियतमाः वाचकाः, एवं शान्तिब्रह्म—सडोलीकर—दत्तहस्तः अहं परम्पराभिमानी अधुना कमपि शास्त्रिणं भाषितृत्वेन आयोजयामि इति चिखलीकरशास्त्रिणां गृहं गतः । मां दृष्ट्वा एव अवदन् शास्त्रिवर्याः "नैजाङ्घ्रिसरसीरुहद्वन्द्वविन्यासेन पवित्रयन्तु भवत्त्वावच्छिन्नाः श्रीमत्त्वनिरूपितमनःसम्पत्तिकाः मान्याः महोदयाः आस्माकीनम् उटजम् इदम् । करालः किल अयं कलिकालः । विरलत्वपक्षं गताः इदानीन्तने काले पण्डितमण्डलीमण्डनायमानाः विपश्चिदपश्चिमाः । तत्रापि पण्डितराजराजितिलकाः । तत्रापि चुलुकीकृतषड्दर्शनाः । तत्रापि दिगङ्गनाभिचुम्बितयशोराशयः । तत्रापि सौजन्यसारसुमनःसुगन्धितककुप्चतुष्टयाः । अतः भवताम् आगमनेन अमन्दानन्दसन्दोहतुन्दिलं मोदमेदुरं मे मनः । केन खलु हेतुना अनुभाविताः विरहं स्वप्रासादगताः रमण्यः श्रीमद्भिः ।"

"अं ? हं....हं, केन कारणेन आगतः अस्मि इति पृच्छन्ति भवन्तः । भवतु, भवतु । न किमपि, न किमपि । आसम् एतेन मार्गेण गच्छन्, अचिन्तयं च चिरदृष्टान् शास्त्रिवर्यान् एकवारं पश्यामि इति ।

न कोऽपि विशिष्टः हेतुः आगमने । भवतु । दृष्टाः भवन्तः । आपृच्छे इदानीम् ।"

एतावत् कथमपि उक्त्वा "अहो, अहो किम् इदम् ? किम् इदम् ? विधीयतां स्वल्पः कृपापाङ्गः, आस्यतां क्षणम् " इति ससंरम्भं वदतः शास्त्रिवर्यान् सर्वथा दुर्लक्ष्य, उपरुद्धश्वासः इव हस्तचरणं धुन्वन् अहं शरवेगेन बहिः आगतः । बहिः आगत्य दीर्घदीर्घं श्वसितवान् । शिरोवेदनाशामकम् अञ्जनं सहस्रवारं घ्रातवान् । दश वमनरोधकानि गीर्णवान् । त्रिवारं चहाम् आस्वादितवान् । ततः किल पाण्डित्यताडितं गरगरायमाणं मे मस्तिष्कं किञ्चिदिव प्रकृतिं प्राप्तम् । "सर्पपण्डितयोर्मध्ये वरं सर्पो न पण्डितः । सर्पो दशति कालेन पण्डितस्तु 'पदे पदे' ॥" इति कविकृतम् अपि सत्यं किल वचनम् ।

चिखलीकरपाण्डित्यविदीर्णहृदयः अहं प्रथमम् आयुःक्षेमकारिण्याः[१४] कार्यालयं गतः । यदि अस्मिन् भाषणमालायज्ञे अहं हुतात्मा भवेयं तर्हि मम आप्ता (न यद्यपि मां तथापि) किमपि धनं लभेरन् इति तत्र ध्रुवकार्यं कृत्वा अनन्तरम् एव अवशिष्टानि भाषणानि आयोजयितुं गतः अयं जनः ।

अस्माकं नगरे श्रीढोबलमहोदयाः सूक्ष्मसौन्दर्यदर्शित्वेन विराजन्ते । अतः एकस्मिन् गुरुवासरे पावितं तेषां गृहं मया स्वपादस्पर्शेन । कण्ठस्थीभूतं प्रास्ताविकम् उद्गीर्य मया उक्तम् "मान्याः, भाषन्तां तर्हि भवन्तः शाकुन्तलम् अधिकृत्य ।"

"ओ हो हो हो ! शाकुन्तलम् ! आ हा हा हा ! तत् एव शाकुन्तलं यत् कालिदासेन लिखितम् । रम्यं रम्यम् । तत् एव शाकुन्तलं यत् कालिदासेन ग्रथितम् । सुन्दरं सुन्दरम् । तत् एव शाकुन्तलं यत् कालिदासेन निबद्धम् । रमणीयं रमणीयम् । तत् एव शाकुन्तलं यत् कालिदासेन रचितम् । मधुरं मधुरम् । तत् एव शाकुन्तलं यत् कालिदासेन प्रणीतम् । (अत्र मान्याः महाभागाः किञ्चिदिव श्रान्ताः, अहं च कालिदासेन अस्मदुपकाराय शाकुन्तलं किमर्थं समुद्रे न क्षिप्तम् इति अचिन्तयम् !) भवतु । अस्तु । आस्ताम् । तिष्ठतु । भाषिष्ये । वक्ष्यामि । वदिष्यामि । भणिष्यामि । परं कदा ? कुत्र ? केषां कृते ?"

१४. Life Insurance Corporation.

"अग्रिमे मासे, अन्तिमे सप्ताहे, अस्माकं महाविद्यालये, विद्यार्थिनां संस्कृतप्रेमिणां च कृते।" पर्यायशब्दप्रयोगनिर्विण्णेन मया नेत्रे निमील्य द्रुततमम् एकस्मिन् एव श्वासे इदं सर्वम् उक्तम्।

"भवतु। अस्तु। आ...."

"हां, हां, ज्ञातं, ज्ञातम्। अनुगृहीतः अस्मि, अनुगृहीतः अस्मि।"

एवं मासं यावत् विद्वद्गृहात् विद्वद्गृहं भ्रमता मया आयोजितानि कथमपि भाषणानि। परं न आसीत् दुःखस्य अनन्तरं सुखं मम प्रारब्धे। "वक्ता चेत् प्रतिजानीयाद् अयमस्मीति योजकम्। किमर्थं योजकस्तर्हि शरीरमनुसञ्ज्वरेत्॥" इति आसीत् मम श्रद्धा। परं गच्छता कालेन मया ज्ञातं यत् यथा इह लीलालब्धः भाषिता क्षीयते, एवम् एव इह श्रमचितो भाषिता क्षीयते। शान्तिब्रह्ममहोदयाः यस्मिन् समये भाषितुं सिद्धाः तम् एव समयं सडोलीकरमहोदयाः वाञ्छन्ति। यः विषयः ढोबलमहोदयेभ्यः रोचते स एव सहसा हण्डिगोलमहोदयानां रुचये कल्पते। यस्मिन् समये भाषणार्थं बेडौलमहोदयान् विज्ञापयामि तस्मिन् एव समये कस्याश्चन साहित्यसंस्थायाः बेडौलप्रेम उल्लसति, सा च तान् भाषणार्थं ससम्मानं निमन्त्रयते। सर्वेषां भाषितॄणां समयं विषयं च कथं कथमपि निश्चाय्य यावत् विद्यार्थिनः इमां भाषणमालायोजनां ज्ञापयितुं महाविद्यालयम् आगच्छामि तावत् तस्मिन् एव समये अन्यया कयाचन सङ्घटनया अपरा चित्ताकर्षकतरा भाषणमाला आयोजिता इति सूचनाफलकः ज्ञापयति, मां मूर्च्छयति च।

अन्ते तावत् परिणतं मम यत्नस्य फलम्। मासेन सर्वं सुसम्पन्नम्। 'संस्कृतनाटकविषयिणी भाषणमाला' इत्यत्र 'भाषणमाला' इति शीर्षकं कृतम्, सर्वश्री—शान्तिब्रह्म—सडोलीकर—चिखलीकर—ढोबलबेडौल—हण्डिगोल—दाण्डिमारमहोदयानां कार्यं सर्व श्री—तडतडे—गडबडे—धडपडे—लुगरे—सद्रे—नान्दुर्गीकर—गडहिङ्ग्लजकरमहोदयैः निर्वर्तनीयम् इति निश्चायितम्, भाषणविषयाः उत्तररामचरितादीन् अपसार्य वेणीसंहारं, पुरुषस्वरूपं, परमाणुसिद्धान्तः, प्रत्यक्षोपपत्तिः, कुण्डलिनीशोधः, मायापरीक्षा, विधिमीमांसा इति योजिताः, इत्येतत् सर्वं यदि न विचार्येत तर्हि अन्यत् सर्वं यथा पूर्वम् इष्टम् आसीत् तथैव सम्पन्नम्। न क्वापि मनोरथभङ्गप्रसङ्गः उपस्थितः।

एवं मननसागरोद्धृतात् इमां भाषणमालायोजनारत्नावलीम् अहं सभाम् एकाम् आहूय स्वसहाध्यायिभ्यः अदर्शयम्। ततः च अस्याः योजनायाः

अनुष्ठानार्थं द्रव्यमनुष्यबलं देयम् इति व्यज्ञापयम् । सभा समाप्ता। अपरेद्युः मम हस्ते निवेदनपत्रकम् एकम् आगतम् ।

आङ्ग्लदेशे 'यः अस्माकं प्रतिनिधिभ्यः संश्रृणुते स एव अस्मत्तः करम् आदातुं कल्पते इति घोषणाप्रसिद्धम् एकम् आन्दोलनम् अभूत् । अपि तत् भवता न ज्ञायते ? यदि भाषणमालायोजकेषु अस्माकं प्रतिनिधिः नास्ति तर्हि किमिति अस्माभिः द्रव्यबलं देयम् ? जायमानः वै आयोजकः त्रिभिः ऋणवान् जायते, कार्यवाहत्वेन सङ्घटनामार्गदर्शिभ्यः प्राध्यापकेभ्यः, नियोजकत्वेन भाषितृभ्यः, प्रतिनिधित्वेन च स्वसहाध्यायिभ्यः । अपि च, सर्वेषां विद्यार्थिनां वस्त्रकोशेषु सदा एव द्रव्यं खुलखुलायते इति मन्यते किं भवान् ? विना क्रोधं विचार्यताम् इति प्रार्थयमाना

कु· चिचुन्द्री

प्रतिनिधिः, विद्यार्थिनीविभागः ।

प्रियतमाः वाचकाः, तर्कयन्तु भवन्तः पत्रकम् एतत् पठित्वा मया किं नाम कृतं स्यात् इति । मया किल, मान्याः, मया किल.... मया किल प्रत्युत्तरं लिखितम् ।

"यः अस्माकं प्रतिनिधिभ्यः संश्रृणुते स एव अस्मत्तः करम् आदातुं कल्पते' इति घोषणाप्रसिद्धम् आन्दोलनं मम ज्ञानानुसारम् अमेरिकायां बभूव । यदि भवत्यै रोचते तर्हि आङ्ग्लदेशे अपि तस्य स्थापनायां क्रियमाणायां न मे कश्चित् विरोधः ।"

भवदीयः,

अशोकः अकलूजकरः

आत्मनियुक्तः प्रतिनिधिः ।

प्रियतमाः वाचकाः, अधुना भवन्तः, 'अस्मिन् प्रतिपत्रके भाषणमालाविषये न किमपि दृश्यते, तस्याः किम् अभूत्' इति अवश्यं पृच्छेयुः । प्रेष्ठाः, सा किल....सा किल आगामिनः वर्षस्य डिसेम्बरमासे भवेत् । तदा....तदा नाम अहं प्राप्तस्वास्थ्यः रुग्णालयात् प्रत्यागमिष्यामि । अथवा, किं बहुना—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वनाडिकाः ।
क्षीयन्ते बहु मांसानि भाषणानां नियोजने ॥

# कालिदासमहोत्साहं नाम नाटकम्

हरि रामचन्द्र दिवेकरः

[ततः प्रविशति सूत्रधारः पारिपार्श्वकौ च]

सूत्रधारः—कवये कालिदासाय प्रार्पये सुमनोऽञ्जलिम् ।
यत्कीर्तिकौमुदी नित्यं त्रिषु लोकेषु राजते ॥

कृतं मया मङ्गलाचरणम् । [पारिपार्श्वकं प्रति] मारिष, प्रेरितोऽस्मि अनया विद्वत्परिषदाऽध्यक्षेण च यत् अस्मिन् कालिदासमहोत्सवे केनचित् नवेन नाटकेन उपस्थातव्यमस्माभिरिति । तत्कथय केन नाटकेन अस्याः परिषदः आराधनं कर्तव्यमिति ।

प्रथमः—भाव, ननु रचितमेवास्ति भवता 'कालिदासमहोत्साहं' नाम नवीनं नाटकम् । तत् किं तेनैव अस्याः सभाया मनोरञ्जनं न भविष्यति?

सूत्र० मनोरञ्जनं तु भविष्यत्येव । किं तु

यस्मिन्न स्यान्नायको नायिका वा
त्यक्ता धारा नाट्यशास्त्रस्य यस्मिन् ।
एवंभूतं नाटकं यन्नवीनं
तद्रोचेतात्रैव जाने न जाने ॥

द्वितीयः—सर्वथा व्यवहर्तव्यमस्माभिः ।

सुकृते स्वभिनीते च सत्पात्रपरिचालिते ।
नाटकं चेन्न सिद्ध्येत् तत् नात्र कार्या विचारणा ॥

सूत्र० नैवम् । तेनैव कविकुलगुरुणा किं न कथितं यत्
'आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।' इति ।

प्रथमः—किं तु किं तेनैव न प्रतिपादितं यत्
'पुराणमित्येव न साधु सर्वं
न चापि किंचित् नवमित्यवद्यम् ।'
इति? एषा आधुनिकी परिषदपि गुणग्राहिणी न केवलं पुराणरूढिवादिनी ।

सूत्र० [परिषदं प्रति]

तत्सन्तो द्रष्टुमर्हन्ति सदसद्व्यक्तिहेतवः ।
कालिदास-महोत्साहं कालिदासमहोत्सवे ॥

[नेपथ्ये—कोऽयं कालिदासमहोत्सवः कालिदासमहोत्सव इति आरावः]

द्वितीयः—भाव, किमेतत्?

सूत्र० [विचिन्त्य] आम् ज्ञातम् ।

पुरंदरपुरातिथौ सति महाकवौ, भारते
चिरात्प्रभृति संस्कृतिः स्मरणशेषतामागता ।
अथाऽऽङ्ग्लजनतेजसा विरहिता कथं वर्तते
तदीक्षितुमयं कविर्भ्रमति भारते सर्वतः ॥

इति श्रुतं मया । तन्मन्ये तेनैव श्रुतं भवेत् अस्मदीरितम् । तदधुना वयं सर्वे निष्क्रमणं करिष्यामः । [इति निष्क्रान्ताः ]

(इति प्रस्तावना)

[ततः प्रविशति कालिदासः]

कालि०—अये किमर्थमेष कालिदासमहोत्सवः कालिदासमहोत्सव इति आरावः?

[नेपथ्ये—कविराज, अहं ते कथयामि]

क एष मां प्रत्युत्तरयति? स्वरस्तु नारदस्येव श्रूयते । तत् किं सोऽपि स्वर्गान्मामेवानुसरति? [निरीक्ष्य] अये सत्यमेव नारदेन भवितव्यम् । किंतु किमर्थं वेषपरिवर्तनम्? भगवन्, अभिवादये कालिदासोऽहम् ।

[ततः प्रविशति नारदः]

नारदः—स्वस्ति कविराजाय ।

कालि०—भगवन् किमेतत्?

क्व सा वल्लकी? क्वास्ति वस्त्रोपवीतम्?
　　क्व चोर्ध्वा शिखा? पादुके ते गते क्व।
नवीनेन वेषेण युक्तं सुरर्षे!
　　भवन्तं कथं मानवा मानयेयुः॥

नारदः—तदपि कथयिष्यामि। त्वं तावत् प्रथमं कथय किमर्थं त्वम्
अद्यामृतमहोत्साहे स्वर्गे देवसभां प्रति।
शक्रेण ह्युर्वशीद्वारा समाहूतोऽपि नागतः॥ इति।

कालि०—भगवन्, अमृतविषये न वर्तते मे बहुमानः। अमृतप्राप्तिः देवानामर्थे न वरः किंतु शाप एव इति मन्ये।

नारदः—[विहस्य] साधु, कविवर! साधु। अधुना शोभसे कविरिति। यतः

यत् स्पष्टं सर्वलोकानां कविस्तन्नैव पश्यति।
यत् जना नैव मन्यन्ते तद्विज्ञेयं कवेर्मतम्॥

किंतु किंचित् स्पष्टं कुरु ते विधानम्। कथं वरतां परित्यज्य शापतां प्राप्तं वराकममृतम् इति।

कालि०—ननु को लाभः अमृतेन?

नारदः—को लाभः? को न इति पृच्छ, कविराज! अमृतसेवनेन न जरा आगच्छति, नापि मृत्युः। सर्वदैव तारुण्यं, चिरकालमेव जीवनम्। अत एव च सर्वे देवा अजरा अमराः। किं विस्मृतं तवैव कथनं 'न च खलु वयो यौवनादन्यदस्ति' इति।

कालि०—अत एव देवाः परमार्थतः न यौवनसुखमनुभवन्ति, नापि जीविताननन्दम्। दुःखाभावे, दुःखस्य अत्यन्ताभावे—सुखस्य सुखत्वमेव नष्टं भवति। कथितमेव

'यदेवोपनतं दुःखात् सुखं तद्रसवत्तरम्।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः॥'

नारदः—भवतु, वर्तते कश्चित्सारः तव कथने । किंतु न जानासि यत्तव अनागमनेन रुष्टः शक्र इति ।

कालि०—रुष्टोऽपि स किं मम छेत्स्यति ?

नारदः—तेन विप्रतिषिद्धस्ते स्वर्गप्रवेशः ।

कालि०—एतदेव स कर्तुं समर्थः । उक्तं च

'अंभोजिनीवननिवासविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता ।'

मद्विषये यदि एवं, तर्हि दुग्धे शर्करैवापतिता । अनेन चिरस्वर्गवासेन अहमपि विरक्तो जातः ।

नारदः—स्वर्गवासेऽपि ते विरागः ?

कालि०—भगवन्, विनोदार्थमेव मया विदूषकमुखेन कथितमासीत् यत् 'स्वर्गे न वा अश्यते न वा पीयते, केवलमनिमिषैर्लोचनैः मीना विडम्ब्यन्ते' इति । किंतु सत्यं मया तत् अनुभूतम् । अत एव स्वर्गं पृष्ठतः कृत्वा प्रस्थितः मम मातृभूमिं गन्तुमहम् । जन्मभूमिस्मरणेनैव अहं बलवदुत्कण्ठितोऽस्मि ।

नारदः—किं विद्यते तव जन्मभूमौ; तत्र च [अर्धोक्ते]

कालि०—मा भवान् एकमपि शब्दं कथयतु । भगवन्,

(पद्यम्)

एषा भूर्जननी मे, स्वप्ने सकृदपि येन न कथितं लोके कः संजातः ॥ ध्रु० ॥

उषित्वा चिरं बहिः स्वदेशात् पुनर्दर्शनोत्सुकः स भूयात् ।

प्रतिपदमन्तःकरणे, जननीप्रेम्णा न च संध्यातः लोके कः संजातः ॥

जगति यदि स्यादेष पापकः स हि मन्तव्यः कृमिर्नारकः ।

नाम न गृह्णाति कविः, तस्य यदि स्यात् बहु विख्यातः लोके कः संजातः ॥

स्वार्थगभीरे पङ्के पतितः मृतो जगति स श्वसन् जीवितः ।

पशुत्वं याति यदा, सत्यं नरकं पुनः प्रयातः लोके कः संजातः ॥

नारदः—सुष्ठु कविश्रेष्ठ सुष्ठु । स्वर्गतेन त्वया देशान्तरकवीनामपि उदात्तकल्पनाः स्वीकृत्य दर्शितमेव स्वीयं दूरदर्शित्वम् । परं किमर्थं त्वं पुनः भारतं प्रति प्रस्थितः?

कालि०—शाकुन्तलादपि सरसतरं, विक्रमोर्वशीयादपि रुचिरतरं, मालविकाग्निमित्रादपि मधुरतरं नाटकं रचयितुमिच्छामि। तदर्थं भारतभ्रमणं कृत्वा नूतनान् विचारान्, नवीनाः कल्पनाः, आधुनिकानि शास्त्राणि आत्मसात् कृत्वा बुद्धिवैभवं वर्धयितुं मे मनीषा। अस्मिन् कार्ये, मुनिवर! भवतां साहाय्यमपेक्षितम् ।

नारदः—अत एव च देवराजशापं तव भारतभूमिप्रस्थानं च श्रुत्वा अहमपि त्वामनुगन्तुं प्रवृत्तः । किं तु कविवर! एषा ते कल्पना त्वया कदापि न प्रकाशनीया ।

कालि०—किमर्थम्?

नारदः—अधुना भारतभूमिः स्वतन्त्रा स्वायत्तशासना च संजाता । पारतन्त्र्यवशतः चिरात् परकीयपदतलमर्दितः स्वाभिमानः अधुना शतगुणितेन सामर्थ्येन प्रकटीभूतः । तदभिमानमहावेगेन सर्वमेव तेषां प्राचीनं निखिले संसारे श्रेष्ठतमम् इति कल्पना अधुना भारतीयानां मनसि वरीवर्ति । तदनुसारं त्वमपि जगल्ललामभूतः श्रेष्ठः कविरिति मत्वा भारते तव महोत्सवः सर्वत्र प्रवृत्तः । सर्वे एव जनाः कालिदासमहोत्सवः, कालिदासमहोत्सवः इति तारस्वरेण वदन्ति । स एव आरावः त्वया श्रुतः । किंतु कथयामि ते यत् शाकुन्तलात्सरसतरनाटकस्य कल्पनामपि श्रुत्वा त्वां सर्वे उपहसिष्यन्ति इति । तस्मात् त्वया तूष्णीमेव स्थातव्यम् ।

कालि०—आश्चर्यमेवैतत् । कालिदासमहोत्सवे स्वयं मम कालिदासस्य जिह्वायन्त्रणा ।

नारदः—सत्यमेव कविरसि । कथं त्वां ज्ञास्यन्ति जनाः अयं कालिदास इति । कथय, ननु कथं ज्ञास्यन्ति । स्वर्गतस्य तव कतिपयानि

वर्षशतानि जातानि । न ते प्रतिमापि कुत्रासीत् येन त्वत्सादृश्यं जनैः अनुमेयं भवेत् ।

कालि०—तदधुना किं कर्तव्यम् ?

नारदः—एकतः शोभनमेवैतत् । अधुना त्वं यत्रकुत्रापि गत्वा अज्ञातरूपेण जनानां मनसि किं वर्तते इति ज्ञातुं समर्थो भविष्यसि ।

कालि०—मम तावत् तिष्ठतु कथा । किंतु भगवन् ! नारदस्य रूपं तु सर्वेषामेव भारतीयानां परिचितमेव कृतं पौराणिकैः । तत् किमर्थं भगवता एषा वेषपरिवृत्तिः कृता ?

नारदः—कवे ! क्रान्तदर्शिनोऽपि ते चक्षुः अनाक्रान्ते सूचीभेद्ये कालतमसि प्रवेष्टुं न समर्थम् । कालिदास ! यो नारदः पुराणवर्णनेन कल्पनापरिचितः स यद्यद्य आत्मनः ऊर्ध्वशिखेन तन्त्रीधारिणा रूपेण आगतो भवेत् तर्हि अद्यतनाः पाठशालाबालकाः तस्य तद्विचित्रं रूपं दृष्ट्वा न केवलं तमुपहास्यतां प्रापयिष्यन्ति, अपितु तस्योपरि लोष्टवृष्टिं करिष्यन्ति । तस्मात्,

यथा देशस्तथा वेषो यथा नाम तथा गुणाः ।
यस्य सोऽत्रैव जयति, नेतरे जीर्णवादिनः ॥

[नेपथ्ये–मह्यं देहि, मह्यं देहि । अत्रैका अत्रैका, इतः पश्य, इति कलकलः]

कालि०—भगवन् किमेतत् ? कोऽयं वदान्यो महाभागः ? किं च एवं मेघवृष्टिन्यायेन वितरति ?

नारदः—पश्यामि [इति अग्रे गच्छति]

[ततः प्रविशति हस्तपत्रकाणां संभारं कक्षे धृत्वा वितरकः, समन्ताच्च बालकबालिकाः तमेव कलकलं कुर्वाणाः]

वितरकः—विशाला सभा, विराट्स्वरूपा सभा ।

कालि०—(आत्मगतम्) विशालेति शब्दादेव सा श्रीविशाला विशालापुरी मम स्मृतिपथमागता ।

वितरकः—कालिदासजन्मदिवसे, कालिदासजन्मस्थाने कालिदास-स्मारकनिर्णयार्थम् [इति उच्चैर्घोषयति]

नारदः—[समीपं गत्वा] मह्यमपि एकं देहि ।

वितरकः—एकं किम्? त्रीणि गृहाण । एकं त्वदर्थे, एकं तत्र तिष्ठते ते सुहृदे, एकम् अधिकं रक्षणार्थं क्षेपणार्थं वा ।

[इति त्रीणि हस्तपत्रकाणि नारदहस्ते समर्प्य निष्कान्तो बालकैः सह]

कालि०—[नारदसमीपं गत्वा सुरर्षे, किं तत्?]

नारदः—गृहाण, पठ च स्वयमेव ।

[कालिदासः पत्रकं हस्ते गृहीत्वा विस्फारिताभ्यां लोचनाभ्यां पश्यति]

कालि०—भगवन्! नैव पठितुं शक्नोमि न जाने कस्यां लिप्यामिदं लिखितम् । मम परिचिता वर्णाः न दृश्यन्तेऽत्र । किं न केवलं जातौ, लेखनेऽपि वर्णसंकरो जातः, येन न ते स्पष्टं विज्ञायन्ते ।

नारदः—अयं न वर्णसंकरः । अपि तु वर्णोत्क्रान्तिरियम् । मयैव विस्मृतं यदेतान् वर्णान् पठितुं त्वं समर्थो न भविष्यसि इति ।

कालि०—भगवता कुत्र शिक्षिता एषा वर्णावलिः?

नारदः—मया तु स्वर्गलोकाच्चल, मृत्युलोकमागच्छ, मर्त्यलोकात् प्रतिष्ठस्व, स्वर्गलोकं प्रविश इति सर्वदैव यातायातं क्रियते । एवं कालानुकूल-संचारी अहं सर्वदैव समाजेन सह वर्ते, न कदापि पश्चात् । कालपरिवर्तनेन सह सर्वाणि परिवर्तनानि शनैः शनैः प्रसृतत्वात् सुखपरिचितान्येव भवन्ति ।

कालि०—पठतु भगवान् ।

नारदः—[पठति] विशाला सभा, विराट्स्वरूपा सभा । कालिदास-जन्मदिवसे, कालिदासजन्मस्थाने, कालिदासस्मारकनिर्णयार्थम् ।

कालि०—एतत्तु वितरकशब्दैरेव ज्ञातम् । किंतु कथय भगवन्! कथं ज्ञातमत्रत्यैः जनैः कस्मिन् स्थाने, कस्मिन् दिवसे मया जन्म गृहीतमिति । मया तु तत्सर्वमेव विस्मृतम् ।

नारदः—स्वाभाविकमेव ते विस्मरणम् । तस्मिन् समये जन्मदिवसस्य न किमपि महत्त्वमासीत् । किमासन् कतिचिन्नियमाः तस्मिन् युगे यथा पञ्चमवर्षात् प्राक् अध्ययनारम्भो न कर्तव्यः, अस्मात् वर्षात्पूर्वं विवाहो न कर्तव्यः, अमुकात् वर्षादनन्तरं शासकीयसेवायां प्रवेशो न लभ्येत इत्यादयः ?

कालि०—[विहस्य] न, न । किंतु कः संबन्धो वयसा सह विद्याध्ययनस्य, विवाहस्य, सेवाया वा इति तु न जाने ।

नारदः—[गम्भीरतया] तत्तु ते अनाकलनीयमेव । वर्तमानयुगे सर्वेण आत्मनो जन्मदिनं जिह्वाग्रे एव रक्षणीयमिति दण्डकः । पदे पदे तस्य आवश्यकता ।

कालि०—किंतु कथयतु भवान् कथं मे जन्मदिवस एभिर्निर्णीतः ?

नारदः—तवैव कथनात् ।

कालि०—किं मम कथनात् ?

नारदः—अथ किम् ।

कालि०—कुत्र कदा च मया तत्कथितम् ?

नारदः—किं न लिखितं त्वया मेघदूते काव्ये 'आषाढस्य प्रथमदिवसे' इति । तथैव 'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ' इति च । स्वयं लिखितं स्वयमेव विस्मरसि ।

कालि०—किंतु तस्य संबन्धः यक्षेण न मया सह ।

नारदः—सत्यमेव त्वमदूरदर्शी । अरे, मेघदूतस्य अभ्यासात् पाश्चात्यैः पण्डितैः तदनुगामिभिः पौरस्त्यैश्च, निश्चितमेव, यत्त्वया यक्षमुखेन स्वस्थितिरेव तत्र वर्णिता । तव स्वामिना स्वाधिकारे प्रमादं लक्ष्यीकृत्य वर्षभोग्यो दण्डः तुभ्यं दत्तः । तदा रामगिरौ महान् कारावास आसीत् । तत्रत्यायां कारायां राजाज्ञया त्वं निवेशितः । तत्र स्वप्रियासमागमे त्वमेव उत्कण्ठित आसीः, तां च उत्कण्ठां यक्षमुखेनैव त्वं वर्णितवान् इति । यक्षवर्णनं वाच्यार्थेन, व्यङ्ग्यार्थेन तत्तवैव वर्णनम् ।

कालि०—किंतु एवं गृहीतेऽपि न मया कुत्रापि कथिता मे जन्मतिथिः।

नारदः—न जाने त्वां कथं कथयामि। स्वर्गवासे अमृतसेवनेन ते बुद्धिर्जाड्यं गतेति मन्ये।

कालि०—स्यादेवमपि।

नारदः—कथय रे कालिदास, जनाः प्रथमं कार्यनिश्चयं कुर्वन्ति तिथिनिश्चयं वा?

कालि०—कार्यनिश्चयम्।

नारदः—एवं कालिदासमहोत्सवः कर्तव्य इति प्रथमं निश्चितम्। पश्चात्तन्निश्चयं कृतवद्भिः 'आषाढस्य प्रथमदिवसे' इति मेघदूतस्थं वाक्यं गृहीत्वा तस्मिन्नेव दिने महोत्सवसमारम्भः कृत एव।

कालि०—समारम्भोऽपि कृतः?

नारदः—अथ किम्। किंतु पश्चात् तस्मिन् चरणे 'प्रशम-दिवसे' इति पाठभेदः दृग्गोचरतां गतः।

कालि०—भवतु नाम पाठभेदः।

नारदः—पाठभेदे पक्षभेदः।

कालि०—[आत्मगतम्] मम काव्यस्य शब्दं प्रत्येव न, अपितु अक्षरम् अक्षरं प्रति अवधानं दीयते इति सत्यमेव अहम् आत्मानं धन्यं मन्ये।

नारदः—ततः एकेन पण्डितेन सूचना कृता। यदि महोत्सव-तिथिरेव निश्चेतव्या, किमर्थं सा तिथिर्ग्राह्या यस्यां यक्ष उत्कण्ठितोऽभूत्। अस्यास्तिथेर्वरं स दिवसः यस्मिन् स आनन्दपूर्णोऽभूत्।

कालि०—प्रसन्नः कल्पः।

नारदः—अपरेण प्रतिपादितम्। कारावासान्मुक्तिः पुनर्जन्मसमा। तस्माद्यदि प्रथमजन्मदिवसः अज्ञातः किमर्थं पुनर्जन्मदिवस एव जन्मदिवस इति न स्वीकर्तव्यः। ततः प्रभृति सर्वैरेव एषा तिथिः स्वीकृता।

तस्मादधुना कण्ठस्थं कुरु ते जन्मदिवसं, येन न ते कदापि विस्मृतिः स्यात्। वद कस्मिन् कालिदासेन जन्म गृहीतम्?

कालि०—कार्तिकशुक्लैकादश्याम्। [विहस्य] एते मे भारतीया भ्रातरः सूत्रद्वारा स्वर्गारोहणे पण्डिता भान्ति।

नारदः—अधुना भारते सूत्रमाहात्म्यं बहु प्रवृद्धम्। एते न केवलं सूत्रद्वारा स्वर्गमारोहन्ति अपि तु एतैः सूत्रद्वारा स्वातन्त्र्यमपि संपादितमिति प्रवादः।

कालि०—भवतु। अधुना एतज्ज्ञातुं मे कुतूहलं यत् कथमेभिः तैलबुद्धिभिः मम जन्मस्थानं निश्चितम् इति।

नारदः—तदपि शृणु। त्वजन्मस्थानविषयेऽपि आसन् विविधानि मतानि।

केचित्काश्मीरजं प्राहुस्त्वां केचिद्वङ्गजं विदुः।
मध्यप्रदेशजं चान्ये स्वप्रामाण्यपरायणाः॥
नासीत् एकः प्रदेशोऽपि भारते यन्निवासिनः।
त्वां नाब्रुवत तत्रत्यं स्वाभिमानभरेण च॥

भोः कालिदास! किं त्वमपि स्मरसि कस्यां जातौ त्वमुत्पन्नः, को वा प्रदेशः त्वया स्वजन्मना नीतः धन्यताम्?

कालि०—भगवन्!

किंजातीयोऽहं किं-
देशीयो भारते यदा ह्यभवम्।
जात्यादिधर्मरहिते
स्वर्गे तद्विस्मृतं चिरनिवासात्॥

अद्यापि कोऽहमृषिवर!
निश्चेतुं यदि भवेन्न संभाव्यम्।
भारतवासी कविरह-
मिति पर्याप्तं हि मद्विषये॥

किं तु अस्मिन्विषये को निश्चयो जात इति ज्ञातुं मे बलवती मनीषा।

नारदः—तामपि समाधातुमिच्छामि। एकस्यां सभायां प्रवृत्तेऽस्मिन् वादे एकेन महाभागेन उत्थाय वामहस्ततले दक्षिणमुष्टिं प्रपात्य उद्घोषितम्। इदमेव कालिदासजन्मस्थानमिति वयं ब्रूमः। नास्ति अस्य प्रमाणदानभरः अस्मासु। यावत् न कोऽपि अस्माकं प्रतिपादनं प्रमाणपुरःसरं खण्डयति तावदिदमेव कालिदासजन्मस्थानमिति प्रमाणम्।

कालि०—शोभनो बलवांश्चायं तर्कः। किं तु किं स्थानं निश्चितं तेन इति तु भगवता न कथितम्।

नारदः—या श्रीविशाला विशाला पुरी त्वया विस्तारपूर्वकं मेघदूते वर्णिता, यत्र वक्रेणापि पथा गन्तुं त्वया यक्षमुखेन मेघः प्रार्थितः, या च दिवः खण्डमेकं कान्तिमत् इति त्वया उत्प्रेक्षिता, या च त्रिभुवनगुरोश्चण्डीश्वरस्य धाम, सा उज्जयिनी एव तव जन्मनगरी भवितुमर्हति इति सर्वैरेव एकरवेण निर्णीतम्।

कालि०—अद्य धन्यो जातः उज्जयिनीजन्मस्थानः प्रबोधिन्येकादशी-जन्मदिवसः कालिदासः।

[नेपथ्ये घनवाद्यताडनपूर्विका घोषणा। शृणुत शृणुत भोः पौराः! या विशाला सभा, या विराट्सभा कालिदासस्मारकनिर्णयार्थं निश्चिता सा विशाला मन्त्रिणः कार्यान्तरप्रसक्तत्वादद्य न भविष्यति, न भविष्यति, न भविष्यति। तस्मात्सभास्थाने केनापि न गन्तव्यं, न गन्तव्यं, न गन्तव्यम्। इति डिण्डिमघातः।]

[ततः प्रविशति घनवाद्यताडकैः सह]

उद्घोषकः—[पुनरपि पूर्वोक्तां घोषणां करोति]

नारदः—[अग्रे गत्वा]

किं सर्वमेव कार्यजातं स्थगितम्?

उद्घोषकः—[सरोषम्] किं मया उद्घोषितमेवम्? सभा एव न भविष्यति। अन्यत् सर्वं भविष्यत्येव। मम कार्ये मा कुरु अन्तरायम्।

नगरस्थचतुष्पथेषु सर्वेषु घोषणा अद्यापि कर्तव्या । [इति घनवाद्यताडकैः सह निष्क्रान्तः । ]

कालि०—आसीन्मम महती उत्सुकता तां विशालां सभां द्रष्टुम् । अधुना सा सफला भविष्यतीति न मन्ये ।

नारदः—कविवर!

'यस्यामतं मतं तस्य मतं यस्य न वेद सः ।
इति शुश्रुम धीराणां ये नस्तद् व्याचचक्षिरे ॥'

अनेन उद्घोषणेन सभा न भविष्यतीत्यपि न मन्यस्व । नवागतः त्वमस्मिन् अर्वाचीने स्वाधीने भारते । अहं तु वारं वारं नैकरूपेण गतप्रत्यागतत्वात् चिरपरिचितः । अतो मामनुसर । एते जना न मां जानन्ति न चापि त्वाम् । अतः निश्चिन्तावावां कुत्रापि गमने । मयि मार्गदर्शिनि सर्वमेव सम्यग् दृष्टं भविष्यति । अत आगच्छ । गच्छाव आवाम् ।

[इति निष्क्रान्तौ]

[यवनिका]

(इति प्रथमोऽङ्कः)

## अथ द्वितीयोऽङ्कः

[ततः प्रविशति कालिदासः]

कालि०—कथं नाद्यापि आगच्छति सुरर्षिः? तेन रहितः सत्यमेव किंकर्तव्यमूढोऽहम् ।

[नेपथ्ये वीणारवेण सह 'नारायण' इति नामस्मरणं श्रूयते]

कालि०—[निरूप्य]

तन्त्रीरवः श्रूयते च वीणा किंतु न दृश्यते ।
वदन्नारायणं नाम नारदोऽयं भवेन्न वा ॥

[ततः प्रविशति आधुनिकविद्यार्थिवेषधारी नारदः । कालिदासः विस्मयचकितः]

नारदः—विस्मितमूढ इव किं प्रेक्षसे? कवे!

शिखाच्छादनार्थं शिरोवेष्टनी मे
इयं ग्रन्थरूपा प्रिया वल्लकी च ।
कथं कालिदासीयकाव्यस्य शिक्षा
नवे विश्वविद्यालये तद्धि दृश्यम् ॥

कालि०—भगवन्! अथ कुत्र गम्यते?

नारदः—अखिलभारतीये शासकीये कालिदास-विश्वविद्यालये ।

कालि०—कथम् अखिलभारतीयत्वम्? किं सर्वेभ्य एव भारतप्रदेशेभ्यः छात्रा अत्र आगच्छन्ति?

नारदः—एतन्नावश्यकम् । वर्तते अथ अस्मिन् भारते 'अखिल-भारतीय-नापितसमितिः' 'अखिलभारतीयमहाराष्ट्रसमाजः', 'अखिलभारतीय-हरिजनोद्धारकमण्डलम्' इत्यादि ।

कालि०—किं तर्हि अखिलभारतीयविशेषणं नान्वर्थकम्?

नारदः—अनर्थकं, निरर्थकं वा, किंतु अन्वर्थकं न ।

कालि०—तर्हि तस्य स्वीकारः किमर्थः?

नारदः—शोभायै स्वप्राढ्यापनायै च ।

कालि०—आश्चर्यमिदम् अशोभनं च ।

नारदः—किमर्थमाश्चर्यमशोभनं वा? पृच्छानि किं त्वद्विषयकमेव किंचित्?

कालि०—सुखेनैव ।

नारदः—तर्हि किमर्थं कवे त्वं कालिदासः? किं त्वया कदापि काल्या दास्यं कृतम्? कृतं चेत् न किमत्यन्तं विस्मयावहं यत् त्वया कालिदासेन न एकस्मिन्काव्ये, नाप्येकस्मिन् नाटके स्वस्वामिनी सा काली स्मृता स्तुता वा? यस्याः प्रसादात् त्वं कविर्जात इति प्रसिद्धिः वर्तते लोके, किं तस्या नाम्नोऽपि अग्रहणं न ते भक्तिहीनत्वं दर्शयति? तस्मान्नाम्नो विचारो न बहुकर्तव्यः ।

कालि०—[स्मितं कृत्वा] भगवन्, अथ कुत्र गम्यतेऽधुना? [स्मृतिमभिनीय] आम्। विस्मृतमेव मया। विश्वविद्यालये नु। किं तत्र पाठ्यते?

नारदः—सर्वाः कलाः, सर्वा विद्याः, सर्वाणि शास्त्राणि, सर्वे चाधुनिका आचारविचाराः।

कालि०—तर्हि जातं मे महत्कार्यम्। अत्रैव वर्धितं भवेन्मे बुद्धिवैभवम्। किं न शक्यानि अस्मिन्नेव स्थाने आधुनिकानि शास्त्राणि अध्येतुमहमपि?

नवीनाद्विज्ञानात्स्ववशमुपयाताः प्रकृतयः
श्रमा ये शूद्राणां परिचरणजास्ते विगलिताः।
दरिद्राणां दैवे वसति न मतिश्चोद्यमयुता
तदध्येतुं सर्वं ह्ययमपि जनो वाञ्छति मुने॥

अस्मिन् विश्वविद्यालये सा वाञ्छा कदाचित् पूर्णा स्यात्।

नारदः—किं तु कवे, किमत्र प्रवेशं प्राप्तुमुत्तीर्णा ते प्रवेशपरीक्षा? किं च विद्यते त्वत्सकाशं शिक्षाग्रहणार्थं शुल्कमावश्यकम्?

कालि०—[ग्रीवां चालयित्वा] न, न।

नारदः—[विहस्य] तर्हि ते प्रवेशोऽपि अत्र न, न। महाकवे! गतास्ते दिवसा विद्वन्! अद्य यदि प्रवेशपरीक्षाप्रमाणपत्रं न विद्यते, न च शिक्षाशुल्कं, तर्हि विश्वविद्यालयस्य द्वाराणि तव विषये पिहितान्येव।

कालि०—[सविस्मयम्] आम्। एवं?

नारदः—नवागन्तुकत्वात्सर्वमेव ते नवीनम्। आधुनिके भारते त्वया हृदि स्थापिताः सर्वाः पर्युषिताः कल्पना निःसारयितव्या एव। तव काल आसीद्धर्मप्रधानः। अयं कालः अर्थप्रधानः। अर्थाद्विना सर्वमेवात्र निरर्थकम्। उपविशतो धनम्, उत्तिष्ठतो धनं, धावतो धनं, चलतो धनं, किं बहुना तिष्ठतोऽपि, धनं, धनं, धनमित्येव। श्रूयते सर्वत्र धनस्यैव ध्वनिः।

यस्य धनं स धन्यः, अन्यः अधन्यः । विद्याप्राप्त्यर्थमपि, अधुना न पर्याप्ता गुरुशुश्रूषा, नापि विद्यारुचिरावश्यकी । अद्य तु पुष्कलं धनमेव विद्याप्राप्तिसाधनम् ।

कालि०—तर्हि निर्धनानां विद्या अप्राप्यैव ।

नारदः—अथ किम् । 'अधनस्य कुतो विद्या', इति आधुनिकं सूत्रम् ।

कालि०—[किंचिद्विचार्य] तर्हि 'कुतो धनमविद्यस्य' इत्यपि स्यात् । सर्वे धनिनो विद्वांसः, सर्वे विद्यावन्तो धनवन्तः इति चेत् सत्ययुगमेव प्रवृत्तमिति मन्ये ।

नारदः—मन्ये त्वयाधीतं काव्यशास्त्रमेव । हेत्वाभासयुक्तस्ते तर्कः । न सन्ति सर्वे विद्वांसो धनसंपन्नाः नापि सर्वे धनिनो विद्यायुताः । किंतु अलमेतेन विवादेन । कथं सन्ति अत्राचार्याः, कथं वर्तन्ते च छात्राः इति प्रथमं सर्वं द्रष्टव्यम् । पश्चाद्यदि ते सत्यमेव मनीषा भवेत्, यतिष्येऽहं त्वदर्थे काञ्चित् शुल्कमुक्तिवृत्तिं संपादयितुम् ।

[नेपथ्ये दीर्घो घण्टानादः]

कालि०—किमर्थ एष घण्टारवः ?

नारदः—शिक्षारम्भकालसूचकः । पश्य पश्य कथं विद्यार्थिनः विद्यार्थिन्यश्च पुस्तकभारं हस्ते गृहीत्वा त्वरया आत्मनः कक्षां प्रवेष्टुमिच्छन्ति । तदागच्छ, आवामपि तत्रैव गच्छावः ।

[इति निष्क्रान्तौ]

(इति विष्कम्भकः)

[ततो यवनिकायां दूरीकृतायां दृश्यते शालाकक्षः । एकपार्श्वे भित्तिसमीपम्, उच्चपीठोपरि एका आसन्दी शिक्षकार्थम् । तत्पुरतः कानिचित् काष्ठासनानि सलेखफलकानि]

[ततः प्रविशतो नारदः कालिदासश्च]

नारदः—शीघ्रं चल। कुरु त्वराम्। सर्वेभ्यः प्राक् आवां पृष्ठतमे आसने उपविशावः।

[तथा कुरुतः]

तत एकतः प्रविशतो द्वे विद्यार्थिन्यौ सुकृतनेपथ्ये। तयोरेका सकच्छवस्त्रधारिणी पुष्पालंकृतकेशसंभारा। अन्या विकच्छा द्विकपर्दा च। पृष्ठभागे लंबत एकः, अपरः पुरतः, तेन सह व्यग्रवामहस्ता।]

एका—सखि चन्द्रकले! पूर्णमेव विस्मृतं मया, अद्य किं पुस्तकमध्येतव्यमिति। तस्मात् सर्वाण्येव पुस्तकानि गृहीत्वा अहमागता। कथय प्राध्यापकमहाशयः अद्य किमध्यापयिष्यति?

चन्द्र०—अयि शशिकले, का कथा पुस्तकस्य? अहं तु न स्मरामि विषयमपि। तस्मात् मया तु नानीतमेकमपि पुस्तकम् अभ्यासार्थम्।

शशि०—मिथ्यावादिनि, हस्ते तु पुस्तकसंभारः। मुखेन कथयसि एकमपि नानीतमिति।

चन्द्र०—ननु पश्य कानि एतानि पुस्तकानीति। इयमेका नवलकथा। इदं नवप्रकाशितमेकं नाटकम्। एष काव्यकलापः।

शशि०—किं च खलु इदम्?

चन्द्र०—भर्तृहरेः शृङ्गारशतकं सचित्रम्। एतच्चतुर्थं कुटुम्बनियोजनशास्त्रम्।

शशि०—को लाभस्तवानेन? त्वं तु न अद्यापि कुटुम्बिनी संवृत्ता।

चन्द्र०—महान् लाभः। अति रोचते मे इदम्।

शशि०—दर्शय, दर्शय।

चन्द्र०—अद्यापि अनुभवहीना बालासि।

शशि०—त्वं ननु न केवला माता, अपि तु मातामही।

चन्द्र०—चल, अन्ये छात्रा आगच्छन्ति। आसनग्रहणं तावत् कुर्वः।

[तथैव कुरुतः]

[अन्यतः प्रविशतो विद्यार्थिनौ]

कालि०—(नारदं प्रति) [जनान्तिकम्] किमेवंप्रकारकं विद्याध्ययनं कुर्वन्ति एताः?

नारदः—तूष्णीं तिष्ठ रे। ओष्ठयोः मौनमुद्रां संस्थाप्य कुरु केवलं श्रोत्रकार्यम्। पश्य च शृणु च किमेतौ द्वौ कुरुतः संलपतश्च।

[विद्यार्थिनोरेकस्य हस्ते पुष्पगुच्छकः। अपरस्य करे कन्दुकक्रीडा-साधनं जालदण्डः]

एकः—रे कौशलक! किं संस्कृताध्यापकः अद्य कन्दुकक्रीडापाठं दास्यति?

कौशलकः—नहि रे पुष्पक! स वराकः तं पाठम् अध्यापयितुमक्षमः। कुमारसंभवाध्ययनसमये पार्वत्याः कन्दुकक्रीडां दर्शयितुं स मया प्रार्थितः। किंतु केन प्रकारेण सा गौरी कन्दुकक्रीडामकरोत् सविस्तरं वर्णयितुमपि न स समर्थो बभूव। एते प्राध्यापकाः सत्यमेव पुस्तकाभ्यासजडाः। पुस्तकस्थानां शब्दानां शब्दान्तरप्रतिपादनेनैव अर्थं प्रकटयितुं ते समर्थाः। तैः शब्दैः याः क्रिया ध्वन्यन्ते ताः ते नैव जानन्ति।

पुष्पकः—किमत एव त्वया तत्क्रीडाप्रकारं प्रत्यक्षं दर्शयितुमेतत्कन्दुक-क्रीडासाधनमानीतम्? [किंचिद्विहस्य] किंतु कुत्र कन्दुकः?

कौश०—[कञ्चुकान्तःकोषान्निष्कास्य] एष कन्दुकः। किंतु किं रे पुष्पक! कथय किमर्थम् त्वया आनीतः एष पृथुपुष्पगुच्छकः?

पुष्पकः—तस्यै शशिकलायै दातुम्। अस्मत्तातस्य उद्याने जातानि एतानि। ह्यः तस्या मन आकृष्टमेतैः पुष्पैः। अत आनीतो मया एष पुष्पगुच्छकः।

**कौश०**—आमलकं दत्वा कूष्माण्डपूरणार्थमेष उद्योग इति प्रतिभाति । पश्य कथं

त्वं पीयसे चालसपक्ष्मपङ्क्तिः
उपोषिताभ्यामिव लोचनाभ्याम् ।

तद्यावत् प्राध्यापको नागच्छति तावदेवार्पय देवतायै ।

**पुष्पकः**—[शशिकलासंमुखं स्थापयित्वा] एष मे अल्प उपहारः ।

**शशि०**—बलवदनुगृहीतास्मि । गच्छतु भवान् स्वासनमलंकर्तुम् ।

[पुष्पकः कौशलकसमीपं गच्छति]

**कौश०**—किम् एतावती एव संभावना ?

[उभावपि निजासनयोरुपविष्टौ]

**कालि०**—(नारदं प्रति) [जनान्तिकम्] किं भो एष एव अभ्यासः क्रियतेऽत्र ?

**नारदः**—[तर्जनीं नासिकापुरतः प्रतिष्ठाप्य] वाचंयमो भव । पश्य यद्यत्पश्यसि । सावधानं शृणु यद्यत् श्रोष्यसि ।

[ततः प्रविशति एकेन पार्श्वेन तरुणः अन्येन तरुणी च]

**तरुणः**—प्रियंवदे, कियद्विलम्बितं त्वया । प्राध्यापकागमनवेला संजाता । क्षिप्रं कथयाद्य संध्यासमये कुत्र मिलिष्यसि ?

**प्रियंवदा**—मधुकर, अद्य गृहगमनानन्तरं न मे अवसरः भविष्यति । सूर्यास्तादनन्तरं न माता कुत्रापि गन्तुं मामनुजानाति ।

**मधुकरः**—तर्हि कष्टमापतितम् । अद्य तु मया 'शकुन्तला' नामकचलच्चित्रपटदर्शनार्थं क्रीतं स्वतन्त्रस्थाने उपवेष्टुं पत्रिकाद्वयम् । किं न केनापि मिषेण अतिसंधातुं शक्या सा वृद्धा [प्रियंवदा सरोषं पश्यति] प्रियजननी ।

**प्रियं०**—पश्यामि । [किंचिद्विचार्य] मधुकर! एवं करोमि । विद्यते सखी मे कलावती । तस्या अनुनयं कृत्वा गृहे सत्यनारायणकथाश्रवणार्थं

प्रसादग्रहणार्थं च अद्य रात्रौ निमन्त्रिता भविष्यामि । सत्यनारायणनिमन्त्रणं तु जननी स्वीकरिष्यत्येव । अहमपि द्वितीयदृश्यं दृष्ट्वा प्रहररात्रिपर्यन्तं गृहं गमिष्यामि ।

मधु०—सुष्ठु । सत्यमेव सत्यनारायणः अनेन सत्कार्येण प्रीतो भविष्यति । अधुना उपविशावः स्वे स्वे स्थाने । [तथा कर्तुं परिक्रामतः]

कालि०—[स्वगतम् ]

स्त्रीणामशिक्षितपटुत्वमशिक्षितासु
संदृश्यते किमुत या बहुबोधवत्यः ।

[नारदं प्रति किंचिद्वक्तुमिच्छति]

नारदः—[तूष्णीमेव तं प्रतिषेधति] [नेपथ्ये घण्टानादः] [कालिदासं प्रति] तत्र आगच्छति प्राध्यापकः । सावधानो भव ।

[ततः प्रविशति आपादमस्तकम् आङ्ग्लवेषालंकृतः निःश्मश्रुकः सोपनेत्रकः कक्षे द्वित्राणि महान्ति पुस्तकानि गृहीत्वा, खट् खट् इति सोपानत्कपदध्वनिं कुर्वन् प्राध्यापकः । सर्वे सनारदकालिदासा उत्तिष्ठन्ति]

कालि० [जनान्तिकम् ] किमेष संस्कृताध्यापकः ? शोभना सत्कृतिः ।

नारदः—[तूष्णींभावसंज्ञां दर्शयति] [उच्चं पीठमारुह्य प्राध्यापकः पुरःस्थे लेखनकाष्ठफलके पुस्तकानि पातयति । उपनेत्रं नासिकाया उत्तार्य करलघुवाससा प्रमृज्य पुनः स्थाने स्थापयति । छात्राणामभिमुखो भूत्वा]

प्राध्यापकः—सुदिन सर्वेभ्यः । कृतम् उत्थापनेन । उपविशत सर्वे यूयम् ।

[सर्वे स्वेषु स्वेषु आसनेषु उपविशन्ति] शशिकले ! अद्य किमध्येतव्यमस्माभिः ?

[न शशिकला न कोऽप्यन्यः किंचिद्ब्रवीति] भवतु, अहमेव कथयामि । अथ भारतभूललामभूतेन कविकुलगुरुणा प्रथितयशसा कालिदासेन विरचितमभिज्ञानशाकुन्तलं नाम नाटकं पठितव्यमस्माभिः । अनेन नाटकेन

कालिदासस्य कीर्तिः संपूर्णभारते एव न प्रसृता, किं तु अन्येषु अपि देशेषु । 'गटे' नामकपण्डितेन अस्य बह्वी प्रशंसा कृता ।

**कौश०**—केन भाव? किं नाम तस्य?

**प्राध्या०**—'गटे' इति ।

**पुष्पकः**—मम तातपादानां मतेन तु तस्य कवेः नामोच्चारणमतिकठिनम् । किं तु भवत्कृतमुच्चारणं तु सुलभमेव ।

**प्राध्या०**—उच्चारणे किम्? यो वा को वा उच्चारः भवतु । महत्त्वं वर्तते तस्य विचारे, न तस्य नाम्न उच्चारे । शार्मण्यदेशीयेन तेन विदुषा शाकुन्तलविषये यत्कथितं तत् सावधानेन मनसा शृणुतम् । तेनोक्तम—

संसारे निखिलेऽस्ति सुन्दरतमं तद्द्रष्टुमिच्छास्ति चेत्
भावांश्चैव हि मानसान्मृदुतमान् विज्ञातुमिच्छा यदि ।
बोद्धुं भारतसंस्कृतेश्च विषयं यद्यस्ति कौतूहलम्
एकं नाटकमेव तत्पठ सखेऽभिज्ञानशाकुन्तलम् ॥

**चन्द्र०**—किमेतत्पद्यं तस्यैव 'गेट' पण्डितस्य ?

**शशि०**—तस्य नाम तु 'गटे,' न 'गेट' इति ।

**चन्द्र०**—किमधुनैव गुरुणा न कथितम्, उच्चारणे नास्ति महत्त्वमिति ।

**प्राध्या०**—तथापि 'गेट' इति न कथनीयम् । एतत्पद्यं न तेन विरचितं किंतु तद्भावप्रदर्शकमेव । तस्य पद्यमस्मिन् पुस्तके वर्तते 'जर्मनभाषायाम् । किमहं पठानि तत् ? [इति एकं पुस्तकम् उद्घाटयति]

**सर्वे**—न, न, भाव, न, न । को लाभः तत्पठनेन ? वयं तु तां भाषां न जानीमः ।

**मधु०**—किंतु किं तेन गुरोः पाण्डित्यप्रदर्शनं न भविष्यति ?

**प्राध्या०**—भवतु । नैव लाभः पठने इति बहूनां मतं मानयितव्यमेव । मया तु 'गटे' पण्डितस्य मतं प्रदर्शितम् ।

प्रियं—किंतु किं मतं भवतां भाव ?

प्राध्या०—मन्मतमपि तथैव । अथ शृणुत एकस्य भारतीयस्य पण्डितस्य मतम् । स कथयति [अन्यत्पुस्तकमुद्धाट्य]

काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला ।
तत्रापि च चतुर्थोऽङ्कः तत्र श्लोकचतुष्टयम् ॥

शशि०—किं नाम अस्य पद्यस्य रचयितुः भाव ?

प्राध्या०—अज्ञातनामा एव इति मन्ये । को लाभस्तन्नामज्ञानेन ?

चन्द्र०—पाश्चात्यानां नाम प्रसिद्धम् । भारतीयानामज्ञातमिति किम् ?

प्राध्या०—पाश्चात्या नाम नामप्रथनशीलाः । भारतीया वयं न तथा ।

प्रियं—भावस्तु भारतीयः सन्नपि न मन्यते एवमिति मन्ये । यदा तु भवतां लेखः प्राकाश्यं गच्छति तदा तस्य शिरस्येव भवतां सर्वोपाधियुक्तं नाम प्रकाशते । नामप्रकाशनात् लेखस्य माहात्म्यं वर्धत एव ।

शशि०—अत एव मया पृष्टं तन्नाम । येन केनापि लिखितं न प्रमाणं भवितुमर्हति ।

कौश०—भवतु, के ते चत्वारः श्लोकाः ?

प्राध्या०—चतुर्थाङ्काध्यापनावसरे कथयिष्यामि तान् । अद्य तु प्रारम्भ एव कर्तव्यः ।

पुष्पकः—मम तातपादानां मतेन 'शुश्रूषस्व गुरून्' इति श्लोको विद्यते तेषु चतुर्षु श्लोकेषु ।

प्राध्या०—स्यात् ।

कौश०—किंतु किं भवान्मन्यते ?

प्राध्या०—मन्मतमपि तथैव ।

मधु०—स श्लोको न केनापि पण्डितेन रचितः ।

प्रियं०—अयि कः? 'शुश्रूषस्व गुरून्' इति 'काव्येषु नाटकं रम्यम्' इति वा?

मधु०—अपरः ।

शशि०—तत्र तु नाटकस्य नामापि न विद्यते । 'तत्र रम्या शकुन्तला' इत्यस्मिन् चरणे कथनानुसारेण शकुन्तला कदाचित् रम्या स्यात्, दुष्यन्तदृष्ट्या । किंतु शकुन्तला इति नाटकनायिकाया नाम, न नाटकस्य।

कौश०—कदाचित्केनापि पाणिनिसूत्रेण सिद्धं भवेत् 'शकुन्तला' इति नाटकस्य नाम । भाव ! कथयतु भवान् तत्प्रमाणकं सूत्रम् ।

प्राध्या०—[स्वगतम्] किं कर्तव्यमेषाम् उद्धतानां छात्राणां पुरतः?

कवेर्नाम न जानामि, सूत्रं व्याकरणस्य न ।
नैकः श्लोकोऽपि कण्ठस्थः, किंतु प्राध्यापकोऽस्म्यहम् ॥

भवतु एवं प्रतिपादयामि । [प्रकाशम्] साहित्यावसरे भो कौशलक! व्याकरणमाकृष्य किमर्थमानयसि? भो पुष्पक ! कः श्लोकस्त्वया कथितः?

पुष्पकः—गुरो ! शुश्रूषस्व गुरूनिति ।

प्राध्या०—किं जानाति कश्चित्तं श्लोकम्?

शशि०—जानात्ययं जनः ।

प्राध्या०—पठ तर्हि । [उच्चैः] शृणुत भोः ।

शशि०—[मधुरस्वरेण पठति]

शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने, भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो, वामाः कुलस्याधयः ॥

कौश०—[उच्चैः] पुनरेकवारं, पुनरेकवारम् ।

प्राध्या०—[पुरः फलके मुष्टिमास्फाल्य]

मौनम् मौनम् । न यूयं रङ्गमञ्चसामाजिकाः । शृणुत । अनेन पद्येन शकुन्तला पतिगृहगमनसमये उपदिश्यते पितृतुल्येन कण्वमहर्षिणा । अत्रोपदिश्यन्ते पञ्च वृत्तयः । गुरुशुश्रूषावृत्तिः प्रथमा ।

पुष्पकः—किमस्माकं वर्गभगिन्य इव सा शकुन्तला आसीत् येन सा एवमुपदिष्टा कण्वेन । आश्रमवर्धितायै तस्यै एष उपदेशः पुनरुक्त इव निरर्थकश्च । नासीत् सा गुरुशुश्रूषणपरायणा इति किं न ध्वन्यते अनेनोपदेशेन ?

प्राध्या०—भोस्तर्ककर्कश ! कृतं भवतः तर्कशास्त्रेण । द्वितीय उपदेशविषयः महत्त्वपूर्णः । विवाहितया स्त्रिया सपत्नी सखीवत् मानयितव्या इति तस्य सारः ।

शशि०—गुरो ! कण्वदत्त एष उपदेश इति विस्मृत्य परमार्थत एव वक्तव्यं, किं भवान् मन्यते अस्मिन् विषये ।

मधु०—किमधुनैव भावेन न कथितं यदेष उपदेशो महत्त्वपूर्ण इति ? कमपि पुरुषं पृच्छ अस्मिन् विषये । एतमेवोपदेशं दास्यति स स्वभार्यायै । मधुकरवृत्तयस्तु सर्वे पुरुषाः स्वभावतः ।

प्रियं०—नाम्नोऽनुरूपमेव वदसि । कर्तव्यमेव मया अस्य मननम् ।

चन्द्र०—किंतु पृच्छ कामपि स्त्रियम् । किं द्वे असिलते एकस्मिन्नेव कोशे सुस्थाप्ये ? अस्वाभाविक एष उपदेशः ।

प्रियं०—भवान् कथयतु भवतो भावं भाव !

प्राध्या०—[आत्मगतम् ] उभयतःपाशा एषा रज्जुः । तस्मान्न मया किमपि वक्तव्यमस्मिन् विषये । [प्रकाशम् ] भोः कालिदासेन किं कथितमिति ज्ञातुं वयमत्राऽऽगच्छामः ।

[नेपथ्ये घण्टानादः]

[आत्मगतम् ] ननु उपकृतमेवानेन घण्टानादेन । [प्रकाशम् ] तस्मात्तेन यत्कथितं तस्य योग्यायोग्यविषया चर्चा अप्रासङ्गिकी । [इति

पुस्तकानि उपसंहृत्य खट्खट्कारं निष्क्रान्तः] [अन्येऽपि छात्रा निष्क्रान्ताः]

मधु०—प्रियंवदे, सायंसमयं मा विस्मर ।

प्रियं—न विस्मरिष्यामि यत्त्वया प्रतिपादितं तदपि । [एतावपि निष्क्रान्तौ]

नारदः—भोः कालिदास, दृष्टं त्वया कथं शाकुन्तलस्य अध्ययनं भवतीति ।

कालि०—सर्वमेव दृष्टं सुरर्षे ! एतं विश्वविद्यालयं तु पश्यामि सर्वतः दुष्यन्तशकुन्तलापूरितम् ।

नारदः—श्रुतं यत्कथं तवोपदेशः तन्तुशेषं विदारितः । तव सौभाग्यादध्ययनकालखण्डः शीघ्रमेव समाप्तः । अन्यथा न जाने किं किं श्रवणपथमागमिष्यत् इति ।

कालि०—किं मम तृतीयोपदेशः 'भर्तुः विप्रकृतया रोषो न कर्तव्यो भार्यया, तस्य प्रतीपं च न गन्तव्यम्' इत्यपि नारोचिष्यत !

नारदः—अद्य भर्तुर्विप्रकृतत्वमेव नास्ति । भर्ता नैव शक्नोति विप्रकर्तुम् । या विप्रकरोति सा भार्यैव ।

कालि०—सत्यमेव अनेन दर्शनेन क्षीणाभिमानः संवृत्तोऽहम् ।

नारदः—अधुना तु बहु द्रष्टव्यं विद्यते । पश्चात् न केवलं क्षीणाभिमानः अपि तु विनष्टाभिमानः भविष्यसि । भाग्येषु अनुत्सेकिन्या न केवलया शकुन्तलयैव भाव्यम् । अपि तु कालिदासमहोत्सवे स्वयं कालिदासेन गलितनष्टाभिमानेन अनुत्सेकिना भवितव्यमिति मन्ये । तदागच्छ । अग्रे किं द्रष्टव्यमित्यस्य विचारं कुर्वः ।

[निष्क्रान्तावुभौ]

[यवनिका]

(इति द्वितीयोऽङ्कः)

## अथ तृतीयोऽङ्कः

[ततः प्रविशति विचारमग्नः द्विचक्रवाहनं संचालयन् कश्चित्तरुणो नागरिकः । तथैव किंचित्परिक्रम्य, तस्मादुत्तीर्य च]

**तरुणः**—इदं सर्वज्ञभट्टाचार्यस्य श्रीमतः श्रीदासस्य सदनम् । तद्यावत्स वातसेवनार्थं न गच्छति तावदेव मया स द्रष्टव्यः ।

[अग्रे दृष्ट्वा]

अयं स स्वयमेव इत आगच्छति । मन्ये वातसेवनार्थं न, किं तु कार्यान्तरार्थं प्रस्थितः । तत् तस्यैव सहचरो भवामि ।

[ततः प्रविशति कज्जलवर्णः पृथूदरः आपादतलमस्तकं यन्त्रास्पृष्ट-प्रशस्तश्वेतवस्त्रसंवृताङ्गः नौसदृशीं श्वेतामेव 'गांधी'-शिरोवेष्टनीं धारयन् वेत्र-हस्तः सर्वज्ञभट्टाचार्यः श्रीदासः]

**तरुणः**—[तस्य संमुखीभूय] भट्टाचार्य महाशय! 'जय त्रिलोकि, जय त्रिलोकि' । अद्य वातसेवनसमये कुत्र अन्यत्र गम्यते?

**भट्टाचार्यः**—[स्वगतम्] अये कार्यकारणतत्परः मे सुहृत् चाटुवाक् नटवरः । [प्रकाशम्] नमस्ते, नमस्ते । क एष अभिनवः स्वागत-संबोधनप्रकारः?

**नटवरः**—एते संबोधनप्रकाराः एषु दिवसेषु अतिशीघ्रतया परिवर्त-मानाः । 'अभिवादयेऽहं भोः' इत्यस्य प्राचीनप्रकारस्य स्थाने समत्वसूचकं एकवचनयुक्तं 'नमस्ते' इति प्रवृत्तम् । तस्यापि स्थानं देशप्रेमसूचकेन 'जय हिंद' इत्यनेन गृहीतम् । तदपि दूरीकृत्य आचार्य 'बाबा विनोबा' महोदयेन तत्स्थाने 'जय जगत्' इति संस्थापितम् । पदमेकमग्रतो गत्वा अनेन नटवरेण 'जगत्' शब्दस्थाने 'त्रिलोकी'शब्दः अभिषिक्तः । अत एव अधुना कथयामि 'जय त्रिलोकि' इति

**भट्टाचार्यः**—[विहस्य] भवतु भवतु । केन कारणेन अत्रागमनेन त्वया आत्मा संभ्रमः कृतः?

नटवरः—इच्छामि द्वे निमन्त्रणपत्रे अद्यतनसमारोह-दर्शनाय ।

भट्टा०—किं विक्रमकीर्तिमन्दिरान्तर्गतकालिदासप्रेक्षागृहस्य उद्घाटन-समारोहे ?

नटवरः—अथ किम् ।

भट्टा०—अशक्यमेव तत् । यावन्ति अनुज्ञापत्राणि मुद्रापितानि, तानि सर्वाण्येव वितीर्णानि । नैकमपि शिष्यते । त्वया ह्यः किं न कथितम् ?

नट०—ह्यस्तु नैवासीदावश्यकता । कथयन्तु भवन्तः किंतु किमर्थं तस्य स्थानस्य 'नाट्यमण्डपः' इति नाम त्यक्त्वा 'प्रेक्षागृहम्' इति नाम निहितम् ?

भट्टा०—नाट्यगृहमित्युक्ते केवलं तत्र दर्शयिष्यमाणस्य नाटकस्यैव बोधो भवेत् । प्रेक्षागृहशब्दस्तु यद्यत् प्रेक्षकैः प्रेक्षणीयं, नाट्यं वा, नृत्तं वा, गानं वा, चलच्चित्रं वा, व्याख्यानं वा तस्य सर्वस्यैव समावेशे समर्थः । श्वः तत्र मालविकाग्निमित्रस्य एकः प्रवेशः, उर्वशीवियोगमत्तस्य पुरूरवसः पद्यानां गानं, हस्तिनापुरधीवरस्य नृत्यं, 'स्त्री' इति नाम्ना प्रथितस्य चलच्चित्रस्य प्रधानोंऽशः, 'कालिदासवर्णितं रघुराजस्य समुद्रयानं' इत्यस्मिन् विषये व्याख्यानं सर्वमेव अद्यतनादुद्घाटनादनन्तरं भविष्यति ।

नट०—अत एव निमन्त्रणप्राप्तिविषये मम निर्बन्धः ।

भट्टा०—प्रथमं तावत् कथय के ते सुरसुन्दर्यौ ये एवं त्वया अनुग्राह्ये ?

नट०—न ते केचित्सुन्दर्यौ ये स्वर्गपण्याङ्गनासमसौकुमार्ये मर्त्यलोक-परभृतिके, भवादृशां मानवेन्द्राणां सुकुमारं प्रहरणं, प्रत्यादेशः रूपगर्वितानां चलच्चित्रनटीनाम् अलंकारश्च अस्य नगरस्य भवितुमर्हतः । ते एवं स्यातां चेत्, जाने यत् भवतामयःसदृशमपि हृदयं तयोरर्थे द्रवीभवति, अज्ञात्वैव हस्तात्प्रभ्रष्टानि भवन्ति निमन्त्रणपत्राणि ।

भट्टा०—तर्हि कौ तौ महाभागौ ययोरर्थे एषः प्रयत्नः क्रियते ?

नट०—एतौ द्वौ ह्य एव नवागतौ, अपरिचितौ अस्य देशस्य कालस्य वा। ह्यः अपराह्णे महतः संकरान्मुक्तोऽयं जनः।

भट्टा०—कथमिव ?

नट०—महाकालदर्शनार्थं नित्यमेवाहं गच्छामि अपराह्णकाले।

भट्टा०—किमर्थं न प्रातः, नापि मध्याह्ने, नचापि सायाह्ने ?

नट०—आचार्य भवद्भिरेव कथितं यत्—

प्रातः काले शिवं दृष्ट्वा निशापापं विनश्यति।
मध्याह्न आजन्मकृतं, सायाह्ने सप्तजन्मनाम्॥

इति। मया तु पापमेव न क्रियते यद्विनाशाय शिवदर्शनं कर्तव्यम्। अथवा यदि क्रियते तर्हि तस्य विनाशं नेच्छामि। अत एव यस्मिन् काले शिवदर्शनेन अशिवं न नश्येत् तस्मिन्नेव काले महाकालमन्दिरं गच्छामि।

भट्टा०—भवतु, किंतु ह्यः किं वृत्तम् ?

नट०—महाकालं दृष्ट्वा, एतत् द्विचक्रवाहनमारुह्य, वेगं गृहीतवति एतस्मिन् पादाधाराभ्यां चरणौ दूरीकृत्य उपरि पुरतस्तौ संस्थाप्य स्वस्थचित्तेन मया स्वैरं मुक्तं मे वाहनम्।

भट्टा०—ततस्ततः।

नट०—ततो दूरादेव दृष्टौ मया तेजःपुञ्जशरीरौ द्वौ महाभागौ। तयोरेकेन अतित्वरया, मा मा इति कथयन्तमप्यपरं करेण दूरीकृत्य, मद्वाहनपुरतः द्वावपि करौ प्रसार्य, 'संस्थापय, संस्थापय' इति उच्चैः ब्रुवता स्थापितः स्वभव्यदेहः।

भट्टा०—ततः किं संजातम् ?

नट०—तत्क्षणमेव वाहनगतिं निरुध्य यावदहं वाहनासनादुत्प्लुत्य भूमौ पदं दास्यामि तावदेव तेन वाहनचक्रदण्डौ धृत्वा सभयदयाक्रान्तमनसा 'न व्यथितं किंचिदङ्गम्' इति अहं पृष्टः। मया तु तत्क्षणमेव ज्ञातं

यदयमदृष्टैतादृशवाहनः कश्चिद्ग्रामीणः पुरुष इति । किंतु किं जानन्ति भवन्तः कथं तौ अभिधीयेते इति ?

भट्टा०—कथमहं जाने ? कथय ।

नट०—एकस्तयोरात्मानं नारद इति कथयति । स तु महान् धूर्तः । अपरः किं तु सरलस्वभावः येनाहं संरुद्धः । तस्य नाम कालिदास इति । द्वावपि नारदकालिदासौ अतीवोत्सुकौ द्रष्टुमेतं समारम्भम् ।

भट्टा०—सत्यमेव न विद्यते मत्सकाशे एकमपि निमन्त्रणपत्रम् । अन्यथा कथं प्रत्यक्षमेव आगताय [विहस्य किंचित्] कालिदासाय तन्न दीयते ।

नट०—चिन्तयन्तु भवन्तः कांचित् प्रयुक्तिं येन तयोः मनोरथः सिद्धयेत् ।

भट्टा०—[विचारं नाटयति ।] [प्रविश्य अपटीक्षेपेण]

पुरुषः—महामान्य ! एतत्पत्रं भवतां हस्ते समर्पयितुमहमादिष्टः । [इति तथा कृत्वा निष्क्रान्तः]

भट्टा०—[पत्रं वाचयित्वा] महाननर्थ आपतितः । [किंचिद्विचार्य] नटवर, किं तौ नवागतौ एकैकस्मिन् प्रवेशद्वारे स्थित्वा प्रवेशसंयमनं कर्तुं समर्थौ ? किंचित्कालमेव तत्कर्तव्यं प्रारम्भे । पश्चात् यदा रक्षिणः आगत्य तत्कार्यं स्वीकरिष्यन्ति, तदा तौ यत्र कुत्रापि स्थातुं समर्थौ भविष्यतः । एवं प्रेक्षागृहस्य यस्मिन् कस्मिन्नपि भागे स्थित्वा सर्वमेव तयोः दृष्टं श्रुतं च भविष्यति । किंतु प्रवेशनियमने ताभ्यां दृढव्यवहाराभ्यां भवितव्यं नाम ।

नट०—स्यादेवम् । यतिष्ये । सर्वमेतत् तौ अवबोधयितुं साधयाम्यहम् । भवन्तोऽपि च आत्मनः कार्यार्थं गच्छन्तु । [इति निष्क्रान्तौ]

(इति विष्कम्भकः)

[ततः प्रविशति दुःखितान्तःकरणः लज्जावनतवदनः द्वाररक्षकवेषः कालिदासः]

कालि०——कष्टं भोः कष्टम् ।

यस्मिन्नवन्तिनगरे नृपतेः सभायां
यन्नामसंस्मरणतः चकिताः सदस्याः ।
तत्रैव तस्य च महोत्सवसुप्रसंगे
जातः स एव विधिनानुचराद्धि हीनः ॥

भोः कालिदास, सर्वमेव आत्मनो माहात्म्यं विस्मृत्य स्थापय आत्मानं प्रवेशद्वारे, नियमय च प्रवेशमिच्छतः । [किंचिद्विचार्य] । किंतु कथं नु नारदेन नाद्याप्यागम्यते? [दृष्ट्वा] आगत एव स्मृतमात्रस्तत्रभवान् सुरर्षिः । [ततः प्रविशति द्वाररक्षकवेषः नारदः] भगवन् अभिवादये कालिदासः अहम् ।

नारदः——स्वस्ति । किंतु ध्यानं दत्वा चित्ते स्मर यत् न त्वं कालिदासः, नाहं च नारदः । ह्योऽपि त्वया एष एव प्रमादः कृतः । भाग्यात् तेन नटवरेण

परिहासविजल्पितं वचः
परमार्थेन न मानितं तव ।

आवामधुना द्वाररक्षकौ । त्वं जयः, अहं च विजयः । तच्छीघ्रमेहि । गच्छाव आवाम् । [इति परिक्रामतः] । [किंचित् परिक्रम्य] न त्वया मनसि खेदः कार्यः । यदि अस्माकं निजकर्तव्ये केचित्प्रमादाः भवेयुः, अन्ये तत्र आगत्य आवयोः स्थानग्रहणं करिष्यन्ति नौ च मोचयिष्यन्ति । 'क्षन्तव्यम्' इत्युक्त्वा आवां मुक्तौ भविष्यावः । 'क्षन्तव्यम्', 'अनुगृहीतः' इत्येतौ द्वौ शब्दौ अस्मिन् युगे सर्वार्थसिद्धिसाधकौ । न विस्मर्तव्यौ तौ ।

अस्मिन्युगे सुकर्तव्यं यथा मनसि रोचते ।
कोऽपि क्रुद्धो यदि भवेत् ब्रूयात् क्षन्तव्यमेव तत् ॥

अचिरादेव मुक्तौ भवावः दृश्यदर्शने श्रव्यश्रवणे च ।

[प्रविश्य अपटीक्षेपेण]

पुरुषः—अहो जयविजयौ, किमत्र क्रियते? ननु युवाभ्यां द्वाररक्षणं कर्तव्यम्? कियत एव कालात् जनप्रवेशनमारब्धम्।

नारदः—[करस्थघटिकायन्त्रं दृष्ट्वा] अये अधुना तु त्रीण्येव वादितानि। आवां तु स्वकार्यार्थं गन्तुमादिष्टौ सार्धत्रिवादनसमये। कथं जनैः प्रागेव प्रविश्यते?

पुरुषः—राज्यान्तरमन्त्रिमहाभागाः उद्घाटनसमारोहार्थं निमन्त्रिताः ते तु मध्याह्ने एव आगताः पञ्चवादनसमये तैः कार्यान्तरार्थं गन्तव्यमेव। अतः अयमुद्घाटनसमारोहः मुहूर्तेन एकेन अपकृष्टः। सोऽधुना चतुर्वादन-काले एव भविष्यति। निमन्त्रणपत्रे लिखितात् समयात् प्राक् कथं निमन्त्रित-सज्जना आगमिष्यन्ति इति, मण्डपस्तु येन केन प्रकारेण पूर्णो भवितुमर्हति इति च विचार्य, ये केच पुरुषा रथ्यासु राजमार्गेषु च दृष्टाः तान् सर्वान् प्रवेश्य मण्डपस्तु पूर्णासनः कृतः प्रवेशपत्राण्यदृष्ट्वैव। अतः अधुना अस्माभिः केवलम् अस्मत्प्रमुखसंमुखं गत्वा, 'उपस्थिता वयम्' इति कथयित्वा, यत्र कुत्रचित् गन्तव्यं, यथेष्टं कर्तव्यं च। तर्हि अनुसरत माम्। उपस्थितिं निर्दिश्य यथेष्टकरणे मुक्ता भवामः।

[इति निष्क्रान्तः]

कालि०—अधुना किं कर्तव्यमावाभ्याम्?

नारदः—अधुना तु आवयोः किमपि कर्तव्यमेव नास्ति। को लाभः उपस्थितिनिदर्शनेन आवयोः? अस्मन्नामनी तु तत्र न विद्येते। तस्मात् अधुना आवाभ्यां द्वाररक्षणं परित्यज्य सामाजिककर्तव्यार्थं बद्धपरिकराभ्यामेव भवितव्यम्। [इतः ततः किंचित् परिक्रम्य] भवतु अस्मदर्थे रिक्ते आसने स्तो वा न वा इति पश्यामि। [चतुर्दिशं दृष्ट्वा] तत्र तु अग्रिमायामेव पङ्क्तौ विद्येते द्वे रिक्ते वेत्रासने। आगच्छ। तत्रैवोपविशावः।

कालि०—किंतु यदि निमन्त्रितपुरुषाः आगच्छन्ति, किमावयोर्निःसारणं न भवेत्?

नारदः—न । एकाकिनां पुरुषाणां कारणेन न कोऽपि अस्मान् उत्सारयिष्यति ।

कालि०—किंतु यदि तैः सह काश्चित् सुवसनाः स्वलंकृताः सुन्दर्य आगमिष्यन्ति तर्हि किं भविष्यति?

नारदः—एवंभूते अस्ति उत्थापनसंभावना । किं तु सापि अतिलघिष्ठा । ते रिक्ते आसने तु पङ्क्तेर्मध्यभागे स्थिते । अतः तत्र स्थितानाम् उत्थापनवारः प्रथमं नागमिष्यति । पूर्वं तु तेषामेव निष्कासनं भविष्यति यैः अन्तयोः स्थितानि आसनानि परिगृहीतानि ।

कालि०—तथापि न रोचते मे तत्रोपवेशनम् । आवां तत्रैवोपविशाव यत्र निःसारणस्य आशङ्कापि न भवेत् ।

नारदः—तर्हि किमर्थमत्रैव नास्यते ?

कालि०—अस्मात् स्थानात् न किमपि द्रष्टुं श्रोतुं वा समर्थौ भविष्यावः ।

नारदः—किं तत्र विद्यते दर्शनीयम्? यो महाभागः उद्घाटनार्थं निमन्त्रितः ये चान्ये तत्र उच्चपीठे स्थिताः तेषां सर्वेषामेव विषये ।

शरीरसौष्ठवं नास्ति, सौन्दर्यं च न विद्यते ।
विशेषरहिता वेषा दृष्टिलाभो न कश्चन ॥

कालि०—किं तु किं श्रवणविषये?

नारदः—नैषा तत्कालीना पुराणी सभा यत्र वक्तुः शब्दाः समीपस्थैरेवाश्रूयन्त न दूरस्थितैः । इदानींतनेन ध्वनिक्षेपकेण यन्त्रेण प्रसारितान् शब्दान् यत्र कुत्रापि स्थितौ आवाम् श्रोतुं शक्नुवः ।

कालि०—तर्हि अत्रैवोपविशावः ।

[तथा कुरुतः]

[नेपथ्ये - हलो, हलो, एकः, द्वौ, त्रयः]

नारदः—शृणु । श्रूयते न वा ?

कालि०—सर्वं स्पष्टमेव श्रूयते । किंतु किमर्थमेषा अङ्कगणना ?

नारदः—नासौ अङ्कगणना । यन्त्रेण ध्वनिः सुष्ठु क्षिप्यते न वा इत्यस्यैषा परीक्षा ।

[नेपथ्ये—शृणुत भोः सद्भगिन्यः सद्बान्धवाश्च ! मन्त्रिमहोदयाः स्वस्थानादत्रागन्तुं निर्गताः । कतिभिश्चिदेव निमेषैः ते अत्र पदमर्पयिष्यन्ति । तस्मात्स्वस्थचित्तैः सर्वैः भवितव्यम् ।]

कालि०—[साश्चर्यम्] भगवन् । का नाम एषा विद्या यस्याः प्रभावात्सर्वमिदं गन्धर्वनगरमिव । ह्यस्त एव अहम् आश्चर्याभिभूतः । अङ्गुलिस्पर्शेनैव दीपाः प्रज्वालिता भवन्ति । अङ्गुलिस्पर्शेनैव निर्वाणं यान्ति । वद अत्र, शृणु तत्र कियत्यपि दूरे ।

नारदः—पदार्थविज्ञानमिति संज्ञया ज्ञायते एतत् शास्त्रम । एष विज्ञानसूर्यः पश्चिमाया दिश उदितः । यदा वयं भारतीयाः पश्चिमदिशां पृष्ठतः कृत्वा पूर्वाभिमुखाः 'जगन्मिथ्या, जगन्मिथ्या' इति प्रवदन्त आस्म, एतैः पाश्चात्यपुरुषश्रेष्ठैः अस्य पदार्थविज्ञानशास्त्रस्य अभ्यासात् स्ववशीकृतानि सर्वाणि पञ्च महाभूतानि । [कर्णं दत्वा[ अये श्रूयते महान् करतलध्वनिः । तन्मन्ये तत्रभवन्तः मन्त्रिमहाभागा उद्घाटनार्थम् प्राप्ता इति । अधुना सावधानं शृणु ।

[नेपथ्ये शारदास्तवः श्रूयते]

[या कुन्देन्दुतुषारहारधवला, या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा, या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ।]

कालि०—अथ अग्रे किम् ?

नारदः—मुख्याभ्यागताय सूत्रहारार्पणम् ।

कालि०–किमर्थं सूत्रहारः, न पुष्पहारः? किमत्र शुष्काणि सर्वाणि कुसुमानि येन तेषां हारो न क्रियते?

नारदः—कविवर, सत्यमेव ते स्मृतिभ्रंशः जात इति मन्ये । ह्य एव मया किं न वर्णितं सूत्रमाहात्म्यमाधुनिकम् । पश्य, पुष्पहाराः काभिश्चिदेव घटिकाभिः म्लाना निर्गन्धाश्च भवन्ति । किंतु सूत्रहारस्य शुष्कीभवनमशक्यमेव । मलिनीभूता अपि ते हाराः प्रक्षालिताः पुनः दुग्धधवला भविष्यन्ति । परं च वस्त्रवयनार्थमपि तेषामुपयोगः अस्ति एव । मन्त्रिमहोदयाः प्रतिदिनं पञ्चषेषु समारोहेषु गच्छन्त्येव । प्रतिसमारोहं पञ्च दश वा सूत्रहारान् ते प्राप्नुवन्ति । अनया गणनया तेषां सकाशे शतशः सूत्रहारा एकीभवन्ति । तान् विक्रीय वस्त्रव्ययः सुखेन लब्धुं शक्यः ।

कालि०–तर्हि किं सर्वाणि पुष्पाणि भगवत्पूजायामेव उपयुज्यन्ते?

नारदः—[स्मितं कृत्वा] न एकस्य भगवतः । किं तु बह्वीनां भगवतीनाम् । एता अधुना केशपाशान् भूषयन्ति सुमनोभिः । तेन तासां पुरतः स्थिताः पुरुषा यथा तासां मुखकमलदर्शनेन प्रीता भवन्ति, तथा पृष्ठतः स्थिताः पुरुषाः शिरोधारितपुष्पाणां घ्राणतर्पणेन सुगन्धेन तृप्ता भवन्ति । ताः सुन्दर्योऽपि मध्ये मध्ये ग्रीवां वलयित्वा पृष्ठतः पश्यन्ति येन द्वयोरपि पक्षयोः सौख्यविनिमयो भवति । भवतु एष करतलघोषः उद्घोषयति यत् स्वागताध्यक्षाः मन्त्रिपरिचयं कर्तुमुत्थिता इति । तस्मात् शृणुवः अधुना ।

[नेपथ्ये—'अयि सज्जनाः, अत्र उपस्थितानां श्रीमतां मन्त्रिमहाशयानां परिचयं भवतामग्रे कर्तुमहमादिष्टः । एते महाभागा अद्यतनैः प्रातर्वृत्तपत्रैः एवं प्रशंसिता यत्तेषां विषये एकमपि शब्दमधुना वक्तुमनावश्यकम्, अपरं च; नैष कालः दीर्घवक्तव्यस्य अपि तु प्राप्तकर्तव्यस्य । सूर्यनारायणं भगवन्तं दर्शयितुं दीपिकोपयोग इव मे भाषणं भविष्यति, इति

मत्वा एषां गुणवर्णने नैकमपि शब्दमुच्चार्य, श्रीमतो मन्त्रिमहाभागान् अस्य प्रेक्षागृहस्य उद्घाटनं कर्तुं संप्रार्थ्य अहमासनपरिग्रहं करोमि ।]

[करतलघोषः ; अचिरादेव खण्डितः]

कालि०—[कर्णं दत्वा साश्चर्यम्] भगवन् कथमधुना न किमपि श्रूयते ?

नारदः—स्यात् ध्वनिक्षेपणे यन्त्रे काचिद्विकृतिः । दूरीभविष्यति सा शीघ्रमेव । [दूरं दृष्ट्वा] अये किमेतत् ? उत्थिताः सर्वे प्रेक्षकाः । मञ्चस्योपरि तु हस्ताहस्ति, दण्डादण्डि, किमेतद्दृश्यते, अपेत, अपेत न गच्छामः, अत्रैव स्थास्यामः, करग्राहं दूरीकुर्मः, बहिः प्रक्षेप्स्यामः इति कोऽयं कोलाहलः ?

कालदासः—किं जातं तत्र ?

नारदः—सम्यङ् न ज्ञायते ।

[प्रविश्य पटाक्षेपेण कश्चित्]

पुरुषः—उद्धूलिता सभा । आरक्षिभिः आक्रान्तो रङ्गमञ्चः । मन्त्रिमहोदयाः तेषामेव रक्षणे बहिर्नीताः । भवन्तावपि गच्छतमधुना ।

नारदः—अनारब्धा एव सभा केन कारणेन समाप्तिमगमत् ?

पुरुषः—आसन् केऽपि महाभागाः सभामण्डपे तस्मिन्, ये एषां मन्त्रिणां करकमलेन अस्य कालिदासस्य प्रेक्षागृहस्य उद्घाटनं न इष्टवन्तः । निश्चितसमयात् प्राक् प्रारब्धा सभा, अनिमन्त्रितैरेव क्षुद्रपुरुषैः आक्रान्तानि सर्वाणि आसनानि, निमन्त्रितास्तु स्थानाभावे क्रुद्धाः इत्येभ्यः सर्वेभ्यः कारणेभ्यः तैः खलु पुरुषैः बलात् विद्युत्प्रवाहं स्थगयित्वा, न वक्तव्यं, नेच्छामः श्रोतुमेकमपि शब्दमस्य, अनिष्टमस्य हस्तेन एतदुद्घाटनकर्म इति महता उद्घोषेण सह विसर्जिता सकला सभा । तत् गच्छत स्वस्थानं प्रति । अद्य अत्र न किंचिद्भविष्यति ।

[इति निष्क्रान्तः]

कालि०—[स्वगतम् ]

मज्जन्मभूमौ मम जन्मनो दिने
  मत्स्मारकार्थं च सभा नियोजिता ।
प्रेक्षागृहोद्घाटनहेतवे या
  द्वे चापि भग्ने, कथमेष उत्सवः ? ॥

[प्रकाशम् ] अस्ति किंचिदधुनापि प्रेक्षणीयम् ?

(पद्यम् )

अहं महाकविरिति चित्तेऽहम् अवहं यं गर्वम् ।
सर्वो गलितः स हि दुर्दैवात् विपरीतं सर्वम् ॥

करिष्यामि किं, पश्यामि च किम् भ्रान्तः संजातः ।
मन्ये स्वर्गनिवासं त्यक्त्वा व्यर्थं चाऽऽयातः ॥

**नारदः**—कविवर, व्यर्थमेव दुःखं वहसि । मा दुःखितो भूः । पश्य

परिवर्तिनि संसारे परिवर्तो न चेद्भवेत् ।
अनवीनो जराजीर्णो भवेल्लोको मृतो यथा ॥

एतौ द्वौ जरठयुवानौ इत एवागच्छतः । तावेव पृच्छावः । किंतु प्रश्नात्पूर्वं वरं तयोः संलापश्रवणम् । अतस्तयोः मार्गात् किंचिदपसृत्य तिष्ठावः । [तथा कुरुतः]

[ततः प्रविशतः परस्परं संलपन्तौ पूर्वोक्तौ द्वौ पुरुषौ]

**वृद्धः**—कथय को लाभः सभोद्भूलनेन ?

**तरुणः**—महान् लाभः । अतः परं सति बहुमतविरोधे कतिचित् प्रभुत्वलोलुपाः हठात् स्वमतेनैव कार्यं कर्तुं न प्रभविष्यन्ति ।

**वृद्धः**—किंतु किमेतादृशेन कार्येण भवतां छात्राणां कालिदासविषये स्पष्टीभवति प्रीतिः ?

तरुणः—नेति वयं जानीम एव। किंतु किं पूर्णतः अपरिचित-कालिदासेन अज्ञातसंस्कृतेन केनचिदुद्घाटनकर्म कारयित्वा स्पष्टीभवेत् कालिदासप्रीतिः? बहुमतविरोधमनादृत्य यैरयं निमन्त्रितः तैरपि किं किंचिद्विचारितम्? अयं संस्कृतभाषाया एकमपि शब्दं न जानाति। बाल्यादेव अनेन वामलिपिः शिक्षिता। देवनागरीलिपिं न सम्यक् पठितुं नापि लिखितुं जानात्येषः। भवन्त एव कथयन्तु किमेतादृशस्य हस्तेन कालिदासप्रेक्षागृहस्य उद्घाटनं शोभनम्?

वृद्धः—'न पूर्णतः शोभनम्' इति तु मम मतमपि। किंतु अस्य महाभागस्य केन्द्रीयशासनप्रभावः भवता विस्मृतः। एकेनाप्यस्य शब्देन महान् धनलाभः अस्य कार्यस्य कृते भवितुं शक्यः। किं विद्याप्रभाव इव संपत्प्रभावोऽपि न विचारणीयः?

तरुणः—न कदाप्येतत् अस्मभ्यं कथितं स्वागताध्यक्षेण।

वृद्धः—न जानन्ति भवन्तस्तरुणाः छात्राः अपरिपक्वबुद्धयः वृद्धवचनं यत्।

मनसा चिन्तितं कार्यं वचसा न प्रकाशयेत्।
अन्यलक्षितकार्यस्य यतः सिद्धिर्न जायते॥

इति।

तरुणः—दूरतोऽस्तु वचसा प्रकाशनम्। किंतु कथमपि तस्य सूचनं कर्तव्यमेवासीत्। भवतु निरस्ता एषा बहुमतविरोधिनी सभा। किं कर्तव्यमधुना इत्यस्य विचारः अस्मत्पक्षेण करणीयः।

वृद्धः—विनाशार्थं बद्धपरिकरा यूयं छात्राः न किंचिदपि विधायकं कार्यं कर्तुं समर्थाः।

नाशयितुमेव यूयं परकार्यं वित्थ न प्रसाधयितुम्।
पातयितुमेव शक्तिः नाखोरुद्धर्तुमत्र पिटम्॥

तरुणः—अलमस्मानाखुसदृशान्मत्वा । सिंहस्यापि पाशान् छेत्तुं मूषका एव समर्था इति न विस्मरणीयम् ।

वृद्धः—अस्तु । किंतु न मे सभाभङ्गो रुचितः ।

तरुणः—अस्माभिः कृत एष सभाभङ्गो मान्यो भविष्यति सर्वेषाम्, ऋते भवद्विधेभ्यो जीर्णविचारेभ्यः । एतादृशस्य पुरुषस्य हस्तेन कालिदासप्रेक्षागृहोद्घाटनं न कस्यापि रुचये । किं बहुना । यदि स्वर्गात् कालिदासोऽपि अत्रागच्छति, सोऽपि एतत्सभाभङ्गार्थम् अस्माकं प्रशंसामेव करिष्यति ।

नारदः—[जनान्तिकं कालिदासं प्रति] अवसरोऽयम् अस्मान् प्रकाशयितुम् । [अग्रे भूत्वा] नमो भवद्भ्याम् । अयं मम सुहृत् कालिदासनामा । मां तु नारद इति कथयन्ति जनाः ।

वृद्धः—स्वागतं भवद्भ्याम् । [तरुणं प्रति] एष चिन्तित एव कुतोऽपि कोऽपि प्राप्तः कालिदासब्रुवः । एतमेव स्वर्गादागतं मत्वा पृच्छामि । [कालिदासं प्रति] भोः कालिदास! दृष्टा एव त्वया सभाया दुर्दशा इति मन्ये । कथय कथं मन्यसे?

कालि०—श्रुतो मया भवतोः संलापः । यदि उद्घाटकः सत्यमेव यथावर्णितः तर्हि अनुचितमेव तस्य हस्तेन उद्घाटनम् ।

तरुणः—[करतलध्वनिं कुर्वन्] साधु कालिदास साधु ।

वृद्धः—सत्यामपि तेन धनहानौ?

कालि०—अथकिम् । धनमेव सर्वेषु सुप्रधानमिति न मे कालिदासस्य मतम् । विदितेऽपि धनमाहात्म्ये येन केन प्रकारेण धनार्जनमप्रशस्तमेव ।

वृद्धः—किंतु किमनेन सभाभङ्गेन कालिदासमहोत्सव एव विरतो न स्यात्?

तरुणः—क एवं कथयति? छात्रपक्षस्य एषा सभा एव अमान्या आसीत् । प्रेक्षागृहस्य उद्घाटनं यस्य कस्यचित् करेण कारितत्वान्न कोऽपि

लाभः । तस्योद्घाटनं श्वो रात्रौ कालिदासस्यैव मालविकाग्निमित्रनाटकस्य एकप्रवेशदर्शनेन सुष्ठु भविष्यति । अधुना तस्यैव नेपथ्यादिव्यवस्थां कर्तुं मया गन्तव्यमेव । भोः कालिदास, समर्थितं भवता मन्मतम् । अतः सन्तुष्टोऽहं दास्यामि भवते द्वे प्रवेशपत्रे सुरक्षितोत्तमासने । रात्रौ अवश्यं तत्र आगन्तव्यं भवता, [स्मित्वा] अनेन नारदेन सह । वयं तरुणाः छात्राः कथं कालिदास-महोत्सवं सम्पादयामः, तदचिरेणैव प्रेक्षणीयं भवेत् । विसृज्येतामधुना इमौ जनौ तत्कार्यकरणाय । [इति निष्क्रान्तः वृद्धद्वितीयः]

नारदः—आगच्छ कालिदास । आवामपि तावत् इतस्ततः भ्रमणं कृत्वा, विश्रामं गृहीत्वा श्वः तन्नाट्यप्रवेशं द्रक्ष्यावः ।

[इति निष्क्रान्तौ]

(यवनिका)

(समाप्तः तृतीयोऽङ्कः)

## अथ चतुर्थोऽङ्कः

[ततः प्रविशति चिन्तामग्नस्तरुणः]

तरुणः—(आत्मगतम्)

एते छात्रा उद्धता नाशशीलाः
नैते शक्ताः शोभनं कर्म कर्तुम् ।
इत्येषा या प्रस्तुता लोकनिन्दा
मिथ्याकर्तुं तां कथं शक्नुयाम ॥

सर्वत्र श्रूयते उद्धताः छात्राः, उद्धताः छात्रा इति । किन्तु न कोऽपि विचारयति कस्मात् कारणात् ते उद्धता इति । किं ते स्वभावत एव एवम् ?

[प्रविश्य]

अपरः—मित्र संयोजक, किमर्थम् एषा चिन्तामग्नता ?

संयोजकः—शोभनक, न जानासि कथं सर्वत्र नगरे छात्राणां निन्दा क्रियते। सर्वत्र उद्घोषितं तैः संक्रुद्धैः सभासञ्चालकैः सडिण्डिमवादम्।

शोभ०—कथं न जाने। किंतु यदि कृत एव अस्माभिः सभाभङ्गः, तर्हि निन्दायाः कथं वयमात्मानं मोचयितुं शक्नुमः?

संयो०—किंतु किं सभाभङ्गो व्यर्थ एव कृतः?

येन केन प्रकारेण, समानीय यतः कुतः।
यं कं च, कार्यं चेत्कर्म, यद्वा तद्वा भवेत्खलु॥

शोभनक! अस्माकं सभोद्धूलनेन इतरे अत्रत्या जनाः निन्दां कुर्वन्तु, किंतु अन्यत आगतेन कालिदासेन तदस्माकं कृत्यं संमानितमेव।

शोभ०—किं यं पुरुषमधिकृत्य त्वया कथितं स परमार्थत एव कालिदासः इति मन्यसे?

संयो०—न जाने सत्यं न वा। किंतु यत् तेन नारदब्रुवेण कथितं तत्तु सत्यमेव विचारणीयम्।

शोभ०—किमुक्तं [विहस्य] तेन सुरर्षिणा?

संयो०—परिहासो न कर्तव्यः। प्रथमं सत्यमेव किं तौ नारद-कालिदासौ इति कल्पना मयापि हास्यतां नीता। किं तु यदा तयोः निवास-स्थले नरवरगृहे तयोः परस्परसंलापः मम श्रोत्रयोः पतितः, तदा स संशयः शिथिलतां गतः। तदा तु तौ न कोऽपि शृणोति इति मत्वा स्वैरमालपन्तौ आस्ताम्। तस्मिन्संभाषणे स्वर्गस्य, तथा स्वर्गाधीशस्य इन्द्रस्य, उर्वश्याः च उल्लेखात् शिथिलीभूतः स संशयः गलितप्राय एव जातः। पश्चाद्यदाहं तयोः संमुखं गतः, आश्चर्यचकिताभ्यां ताभ्यां परिवर्तित एव स्वसंभाषण-विषयः। तेन मम संशयः लुप्त इव संप्रति।

शोभ०—किं त्वया किंचित् भाषितं तत्र?

संयो०—आम्। नारदनामानं पुरुषमहं कथितवान् छात्रनिन्दाविषये।

शोभ०—किं तेन तदा उक्तम्?

संयो०—सोऽब्रवीत्, न त्वया चिन्ता कार्या ।

कार्यं कार्यं कार्यकाले, क्रीडाकाले च खेलनम् ।
दर्शितव्यः शुभाचारः रात्रावद्य समुत्सवे ॥

तस्मिन्नेव काले रथ्यायां तारस्वरेण कोऽप्युदघोषयत् यत्—

एते छात्राः श्वानसमाः खाद्यखण्डविलोलिताः ।
क्षणाद् भूत्कृत्य सन्दंशः क्षणाल्लाङ्गूलचालनम् ॥

शोभ०—किं ताभ्यामपि श्रुतं तत्?

संयो०—अथकिम् । किंतु लज्जावनतवदनं मां वीक्ष्य तयोः कालिदासनामधारिणो महाभागस्य मुखात् ये शब्दा निःसृताः, तान् श्रुत्वा अहं जडीभूतो विस्मयेन, उल्लसितश्च आनन्देन ।

शोभ०—कथय कथय के ते शब्दाः?

संयो०—सोऽब्रवीत् । समानदर्शी महाभागोऽयं, येन युवानः छात्राः श्वानसमतां नीताः । पश्य,

युवा तथा श्वा मघवा तथैव
समानशीलाः परिहासकाले ।
अतो मुनिः पाणिनिरेकसूत्रे
श्वानं युवानं मघवानमाह ॥

शोभ०—अहो बलवती कल्पना । प्रतिभायाः कियत् उच्चैरुत्प्रेक्षणम् । ततस्ततः ।

संयो०—ततो विनोदेन अपनोदितचिन्तस्य मम मुखे स्मितरेखां प्रेक्ष्य तेनाग्रे कथितम् ।

सूत्रे युवा सुग्रथितो हि मध्ये
श्वा चैकपार्श्वे मघवा परस्मिन् ।
युवा भवेत् श्वा यदि विप्रकारितः
सन्मार्गनीतस्तु समं मघोनः ॥

तस्मात् यदि यूयं सर्वे युवानः प्रेक्षागृहमहोत्सवे शोभनं व्यवहरथ, तर्हि अहमेव छात्राणां पक्षं गृहीत्वा सर्वेषां चेतसि तरुणविद्यार्थिवर्यमाहात्म्यं संस्थापयिष्ये इति । एवमुक्तवति कालिदासे स नारदः मध्ये एवाब्रवीत् । 'अयं कः तत्संस्थापने । युष्माकं व्यवहारः अनुशासनबद्धश्चेत् स्वयमेव स तत् समर्थयिष्यति' इत्युक्त्वा उभावपि तौ तूष्णीमासतुः । तेन मन्मनसि निश्चय एव समुत्पन्नः यत् एतौ सत्यमेव नारदकालिदासौ स्वापह्नवमिच्छन्तौ इति ।

शोभ०—तर्हि न विद्यते किमपि कारणं चिन्तामग्नतायाः । स्वयं कालिदासेन उद्धृतपक्षैः अस्माभिः विद्यार्थिविद्यार्थिनीभिः एवं वर्तितव्यं यत् न कोऽपि अस्मान् प्रति अङ्गुलिनिदर्शनं करिष्यति । एतां वार्तां सर्वस्मिन्विद्यार्थिसंघे प्रसारयिष्यामि । मा कुरु चिन्ताम् । त्वयि संयोजके न किमपि अशोभनं भविष्यति ।

संयो०—शोभनक !

छात्रसंघः सिन्धुसमः शान्तः स्यात् क्षोभितो न चेत् ।
यदि क्षुब्धो गिरीणां च ग्रासं कर्तुमपि क्षमः ॥

मा प्रसारय एतां वार्ताम् । किंतु [कर्णे कथयति] एवं कुरु । गच्छ कार्यसिद्धयै । अहमपि आत्मनो नियोगमशून्यं करोमि । [इति निष्क्रान्तौ]

(इति विष्कम्भकः)

[ यवनिकायां दूरीकृतायां दृश्यते प्रेक्षागृहम् ]

[श्रूयते च]

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ॥

[ततः प्रविशति पुष्पाणि विकिरन्ती]

सूत्रधारिणी—

(पद्यम्)

जानीत हि मां सर्वे सूत्रधारिणीम् ।
सर्वेषां छात्राणां कार्यकारिणीम् ॥ ध्रु. ॥

ह्यः सर्वैर्युष्माभिः कार्यभञ्जनम्
दृष्टम्, अद्य पश्यतात्र चित्तरञ्जनम् ।
मालविकाया गानं रुचिरनर्तनम्
प्रार्चयामि वाग्देवीं विघ्नवारिणीम् ॥ १ ॥

[पुष्पाणि विकिरति]

[आकाशं प्रेक्ष्य, विचिन्त्य च] भ्रातरं सुबन्धुमाहूय पृच्छामि एतत्कार्यं न वेति । [नेपथ्याभिमुखी] सुबन्धो ! क्षणमात्रमात्रागच्छ ।

सुबन्धुः—[प्रविश्य] आर्ये किमर्थमहमाहूतः ? किं नाटकारम्भे 'सूत्रधारः नटीं वा पारिपार्श्वकं वा आहूय संलापं करोति' इति नाट्यशास्त्र-नियममेव पालयितुं त्वया सूत्रधारिण्या अहमाहूतः ।

सूत्र०—नहि नहि । एतां परिषदं दृष्ट्वा मे मनसि काचिदभिनव-कल्पना प्रादुर्भूता । तस्याः विषये त्वन्मतं ज्ञातुं तवाह्वानम् ।

सुबन्धुः—कथय का सा कल्पनेति ।

सूत्र०—सुबन्धो, याभ्यां महाभागाभ्याम् अस्माकं छात्राणां हतोत्साहे मनसि संचारित उत्साहः, तौ अत्र अस्मत्प्रयोगं द्रष्टुं बहुमानपूर्वकं

सामाजिकेषु उपवेशितौ। किंतु न स तयोः पर्याप्तः सत्कार इति मन्ये। कथय कथं भवेत् यदि तयोरेव एकस्मै प्राश्निकपदं समर्पितं स्यात्?

सुबन्धुः—को विशेषः? तथा कथिताः प्राश्निकाः बहुधा अक्षिपिधानपूर्वकं विचारमग्ना इति प्रदर्श्य सुखेन निद्रासुखमनुभवन्ति, प्रयोगान्ते च यत्किंच कथयन्ति। तथैव कर्तुं किमेष आरम्भः?

सूत्र०—न। मत्कल्पनाया एतदभिनवत्वं यत् प्राश्निकेन रङ्गमञ्चे एव स्थित्वा मध्येमध्ये स्वमतं गुणदोषप्रदर्शनपूर्वकं प्रदर्शितव्यम्।

सुबन्धुः—तेन शोभनं भवेत्। एवं कृते प्रयोगे अन्तरालोऽपि न भवेत्। प्रयोगस्य दीर्घकालवर्तित्वेऽपि प्रेक्षकैः श्रान्तमनोभिरपि न भवितव्यम। रोचते मे एषा कल्पना।

सूत्र०—तर्हि प्रार्थयेऽहम।

सुबन्धुः—गच्छाग्रतः। अहमपि प्रयोगे न किंचिदपि हीयेत इति द्रष्टुं साधयामि।

[इति निष्क्रान्तः]

सूत्र०—[सामाजिकेषु स्थितौ नारदकालिदासौ प्रति] हे भगवन्तौ, श्रुतं मया यत् नारदकालिदासयोः

एको भगवद्भक्तः गानपटुः चाटुकृतकलहरतः।
अन्यः कवितासक्तः प्रतिभाशीलः स्वकौमुदीधवलः॥

तन्नामधारिणोः नारदेन नाम्ना गानप्रधाने अद्यतने प्रयोगे परीक्षकपदं सुभूषितव्यमिति सर्वेषामेवास्माकं प्रयोगकर्तॄणां प्रार्थना। तस्मात्तेन अत्र आगत्य प्रदर्शयिष्यमाणस्य मालविकानृत्यस्य प्रस्तावना कर्तव्या।

नारदः—[प्रविश्य] भद्रे! किंनाम्ना एव युष्माभिः कृत एष सत्कारः। एवं चेत् शृणु—

नाम्ना लक्ष्मीर् गोमयं संचिनोति
भिक्षासक्तो योऽस्ति नाम्ना कुबेरः ।
मृत्युं प्राप्तः कथ्यते योऽमरेशः
लोके नाम्नो वर्तते नो महत्त्वम् ॥

सूत्र०—भगवन् अलमन्यथा गृहीत्वा ।

मन्यामहे वयं वां तौ बिभृथो नामनी ययोः ।
आदरेण च पश्यामः तन्न कार्या विचारणा ॥

नारदः—भवतु का गतिः ?

राज्ञां स्त्रीणां च बालानां निर्बन्धः पाल्य एव हि ।
अन्यथा क्रमतो दण्डो रोषो, रोदनमन्ततः ॥

भद्रे अनया युक्त्या सूत्रधारकर्तव्ये प्रस्तावनारूपे सूत्रधारिण्या त्वया सम्यङ् नियुक्तः अयं जनः । परमार्थीकृतं च कालिदासवचनं यत् 'निसर्गनिपुणाः स्त्रियः' इति ।

सूत्र०—भगवन् ! नैवैतत् । अहं तु मन्ये यत्

यो लोकत्रितये सदैव चलति स्थाल्यां यथा पारदः
यो लग्नः परमेश्वरे, भवजले लोकस्य यः पारदः ।
यो वर्णेन विराजते भुवि सदा चन्द्रो यथा शारदः
सोऽत्रैवैष विराजते मम पुरः साक्षाद्भवान् नारदः ॥

यदि एवंभूतो भवान् नः छात्राणां संकटसमये पारदो न भवेत्, कं वान्यं वयं शरणं व्रजामः ? अतः किं बहुनोक्तेन । करोतु भगवान् प्रस्तावनाम् अहमेकस्मिन्कोणे स्थिता श्रोष्यामि ।

नारदः—अयि भोः सामाजिकाः, दृष्टमेव भवद्भिः कथमहं सूत्रधारिण्या अनया काष्ठपुत्तलक इव नर्तितः । किंतु यदि सत्यमेवाहं नारदनामा,

तर्हि एतां सूत्रधारिणीमपि कंचित्कालं नर्तयिष्ये । अयि सूत्रधारिणि, यद्यधुना सूत्रधारोऽहं, त्वं तावद्विदूषिका भव ।

सूत्र०—कथं विदूषिका भवामि, भाव?

नारदः—एवं वर्तते विदूषकस्य लक्षणं नाट्यशास्त्रे । 'विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः' इति । तर्हि त्वमपि कुब्जेव तिष्ठ, वक्राङ्गभङ्गस्थापनार्थं दण्डमेकं करे गृहाण, मध्ये मध्ये हास्योत्पादनार्थं वद च किंचित् । [सूत्रधारिणी निष्क्रान्ता] सभ्याः! अचिरेणैव कालेन एका रूपवती सुन्दरी, भवतां पुरः आगमिष्यति ।

सूत्र०—[यथानिर्दिष्टं प्रविश्य] एषाहमागता । किं कर्तव्यं मयाधुना?

[सामाजिकेषु हास्यध्वनिः]

नारदः—सज्जनाः! नैषा सा सुन्दरी । इयं तु विदूषिका । [तां प्रति] विदूषिके! त्वया न किंचित् कर्तव्यम् । कोणे स्थातव्यमेव । [सा तथा करोति] सभ्याः! दूरीकृते पटे कस्याश्चिदवगुण्ठनवत्याः सुन्दर्याः दर्शनं प्रथमं भविष्यति । शनैः शनैः तदवगुण्ठनं यास्यत्यधोऽधः । यथा यथा तदवगुण्ठनं दूरीभविष्यति, तथा तथा तस्याः सौन्दर्यं वर्णयिष्यामि । तद्भवद्भिः अनिमेषलोचनं द्रष्टव्यम् ।

विदूषिका—[उपसृत्य] भाव! का सा? किञ्च सा अहमिव रूपे?

नारदः—त्वं तु सुन्दरी आसीः । किंतु अनेन वेषेण न सुन्दरी, अपि तु वानरी । तिष्ठ स्वकोणे । [इति तां निजकोणे प्रेषयति]

[ततः प्रविशति काचिदवगुण्ठनवती युवती । यथा यथा अवगुण्ठनमपसरति तथा तथा नारदो वर्णयति]

दीर्घाक्षं शरदिन्दुकान्ति वदनम् बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितोऽमितं च जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः ॥

सभ्याः, इयं कालिदासस्य मालविका। अधुना सा शर्मिष्ठायाः कृतिमभिनेष्यति।

विदू० [किञ्चिदुपसृत्य] भाव, केयं शर्मिष्ठा? नक्षत्रनामसु धनिष्ठा तु श्रुता। इदं नाम तु अश्रुतपूर्वम्।

नारदः—[सरोषम्] दूरमपसर। शर्मिष्ठा तु वृषपर्वणः सुता देवयान्याः सपत्नी।

विदू०—सर्वमेवेदं वेदाक्षरसमं दुर्बोधम्। को नाम मघवा इति पृष्टे बिडौजाः स इतिवत्। भवतु आत्मनो मूढताया आच्छादनार्थं वरं तूष्णीमेव स्थातव्यम्। [इति स्वगतमुक्त्वा आत्मनः कोणस्थानं गृह्णाति]

नारदः—प्रथमं तावदेव स्थिरीभूय उपगानं कर्तव्यम्।

विदूषिका—[आत्मगतम्]

उपवक्ता मया ज्ञातः उपाध्यक्षश्च मे श्रुतः।
उपगानं हि किं नाम, न ज्ञातं न च मे श्रुतम्॥
पृच्छामि चेद् गमिष्यामि सर्वेषामुपहास्यताम्।
तस्माद्वरं मौनमेव, प्रष्टव्यं नैव किंचन॥

नारदः—उपगानं नाम अर्थोपकारकैः शब्दैर्विना केवलं स्वरमालिकाया आलापग्रहणम्। मालविके आरभस्व।

मालविका—

धऽपम रेऽसाऽनिसा सारेपऽम
गम पऽपऽधधधध पध निऽसांरें निसां।

नारदः—सभ्याः! योगिन्या नाम रागिण्या इयं स्वरमाला। आर्ये अधुना 'खमाज' रागेण उपगाय द्वितीयं चरणम्।

मालविका—
निनिऽसांऽनिसां निधमध निधपऽऽऽ

गऽम पध निसां निधपगमगऽऽऽ

नारदः—किं श्रुतं भवद्भिः ऋषभहीनम् एतदुपगानम् ? तृतीयं चरणमतः अवधारयत रागे 'बहार' - संज्ञके । कथय बाले !

माल०—

धनि सांरें निसां धनि सांऽऽऽ

मप गम निध निनि सांऽऽऽ

नारदः—सुष्ठु, अथ अन्ततः पुनरागच्छ योगिनीं नाम रागिणीम् ।

माल०—

सां (सां) विधऽऽम म(म)रेऽसाऽ

सारेमऽमऽ, पधनिऽसां रें निसांऽ

नारदः—साधु मालविके, साधु उपगीतम् ।

विदू०—भाव! कोणेऽस्मिन् स्थित्वैव पृच्छामि, को लाभः निरर्थकैः स्वराणामारोहावरोहैः ?

नारदः—अहमपि अत्रैव स्थित्वा ते उत्तरं दास्यामि । अनेन स्वरालापेन रागज्ञानं भवति । अर्थज्ञानं वाञ्छसि चेत् शृणु तत्काव्यम् । मालविके! पठ काव्यं गानानुकूलम् ।

माल०—[गायति]

दुर्लभः प्रियो मे तस्मिन् भव हृदय निराशम् ।
अहो मे स्फुरति कथमयमपाङ्गको वामः ॥

एष स चिरदृष्टः कथमुपनेतव्यः ?
नाथ! मां पराधीनां त्वयि गणय सतृष्णाम् ॥

नारदः—पद्येऽस्मिन् कालिदासेन रत्याख्ये स्थायिभावे चत्वारो व्यभिचारभावा वर्णिताः । प्रथमे चरणे तावन्नैराश्यम् । द्वितीये सविस्मया उत्कण्ठा । तृतीये हर्षयुक्ता चिन्ता । चतुर्थे तु दैन्यम् । एतेषां भावानां नाट्येन प्रदर्शनमतिकठिनं विशेषतः क्रमेण अनेन इति कालिदासेनैव एतन्नाट्यं प्रति 'दुष्प्रयोज्यम्' इति कथितम् ।

विदू०—किंतु किमर्थमेते भावाः?

नारदः—शृणु स्वामिन्या देवयान्याः पतिः ययातिः । तस्मिन् मनो लग्नं शर्मिष्ठायाः । किं तु तत्प्राप्तेराशापि न इति नैराश्यम् ।

विदू०—ततः किं हर्षस्य कारणम्?

नारदः—तस्मिन्नेव काले तस्या वामाक्षिस्पन्दनं जातम् । महिलानां वामाक्षिस्फुरणं शुभम्, किंतु कथं तन्मे भवेदिति सविस्मया उत्कण्ठा । सा उत्कण्ठया इतस्ततः पश्यति । अत्रान्तरे तया दृष्टो दूरस्थितः ययातिः । दृष्ट इति हर्षः । कथमुपनेतव्यः इति चिन्ता । उपनीते सति दैन्यप्रदर्शन-पूर्विका तस्य प्रार्थना । सुन्दरि,

विदू०—किमियं वानरी सुन्दरी जाता?

नारदः—न त्वां सम्बोधयामि । अपेहि । मा कुरु पुनः पुनः प्रत्यवायम् ।

[विदूषिका अपैति]

[मालविकां प्रति] सुन्दरि! प्रदर्शय अभिनयम् । सभ्याः! पश्यत कथं नैराश्यं सूच्यते । नेत्रे तेजोहीने, मुखं विवर्णं, हस्तपादौ शिथिलौ । मुखेन कथयति ।

माल०—दुर्लभः प्रियो मे, तस्मिन् भव हृदय निराशम् । [अक्षिस्पन्दनं सूचयति]

नारदः—अयि भोः दृष्टं किं, कथमनया वामाक्षिस्पन्दनं सूचितम् इति। साधु मालविके। सज्जनाः! पश्यत कथं नेत्रे विस्फारिते, कथं च ते ऊर्ध्व-गामिनी, कथं चकितचकिता नेत्रे किंचित् संकोच्य तयोरुपरि हस्तं धृत्वा इतस्ततः पश्यति चिन्तयति च। एवं विस्मयावहा सूच्यते उत्कण्ठा। शब्दाः मुखाद्बहिरागच्छन्ति।

माल०—अहो मे स्फुरति कथमयमपाङ्को वामः।

नारदः—अये किमनया दृष्टं येन गल्लौ अकस्मात्फुल्लौ जातौ, ओष्ठौ च किंचिद्विवृतौ। मुखमपि सतेजस्कं भूतम्। आम्। दर्शनपथमागतः ययातिः। अत एव हर्षः।

माल०—एष स चिरदृष्टः, एष स चिरदृष्टः।

नारदः—किंतु।

माल०—कथमुपनेतव्यः, कथमुपनेतव्यः?

नारदः—इयं चिन्ता। चिन्तायां लक्षयत कथं ललाटे रेखाः, कथ-मक्षिसङ्कोचः, कथं शरीरस्य स्थिरीकरणम्। अन्ते स समीपमागतः। ततः शृणुत दीनवचनम्।

माल०—नाथ! मां पराधीनां त्वयि गणय सतृष्णाम्।

नारदः—शोभनं मालविके शोभनम्। सुष्ठु गीतमभिनीतं च। अथ भारतीयनाट्यानुसारेण नृत्यं प्रदर्शय।

[मालविका - तथा नृत्यं कृत्वा निष्क्रान्ता]

विदू०—भगवन्, भग्नप्रायाणि मे गात्राणि।

[वक्रीभूय स्थित्वा] तदधुना न शक्नोमि एवं स्थातुम्।

नारदः—तर्हि क्षिप तं दण्डम्। गात्राणि सरलानि कुरु। [सा तथा करोति] अधुना न त्वं विदूषिका अपि तु सूत्रधारिणी। छिन्नं सूत्रं पुनः संधेहि। अहं स्वस्थानं गच्छामि।

सुबन्धुः—[प्रविश्य] महदुपकृतं भवता । अस्माभिः प्रदर्शिते प्रयोगे तेषुतेषु स्थानेषु विवरणं कृत्वा सामाजिकानां चित्तं सुष्ठु आकृष्टम् अस्माकं भगिन्या मालविकारूपायाः कलाकौशलविषये । अतः सर्वेषां सामाजिकानां छात्राणां च मतेन भवद्भ्यो धन्यवादं हृदयेन दास्यामि ।

नारदः—अनुगृहीतोऽस्मि ।

सु०—अन्या च विद्यते काचित् विज्ञप्तिः ।

नारदः—कथय ।

सु०—अत्रभवता अस्मत्साहाय्यं सम्यक्कृतम् । तत्रभवता कालिदासेनापि किंचित् कर्तव्यमिति मनीषा सर्वेषाम् । तस्मात् श्वः अस्मिन्नेव समये तेनात्र व्याख्यानं दातव्यम् । दृढं विश्वसिमि यत् भगवता निर्बन्धकथितः कालिदासः अस्माकं विज्ञापनाममान्यां न करिष्यति, इति । अतः अत्रैव व्याख्यानघोषणां करोमि । अयि सभ्याः [इत्यर्धोक्ते]

नारदः—मा एवं क्षिप्रकारी भव ।

सु०—नाहं दीर्घसूत्री । सूत्रधारिणीहस्ते यत् सूत्रं तदपि लघुलघु । तस्माद्विचारार्थम् अवसरमेव न दास्ये । [पुनः] अयि सभ्याः! समाप्तः एषोऽद्यतनः प्रयोगः । अधुना

यान्तु सभ्यगणाः सर्वे तुष्टा अस्मत्प्रयोगतः ।
इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥

श्वः अस्मिन्नेव स्थाने अस्मिन्नेव समये कालिदासमहोत्सवः कथं कर्तव्यः इत्यस्मिन् विषये स्वयमेव कालिदासस्य व्याख्यानं भविष्यति । तस्मात् सर्वैश्च भवद्भिः निजसुहृद्भिरन्यैः सह अत्र आगन्तव्यम्, आगन्तव्यम्, आगन्तव्यम् ।

[इति निष्क्रान्ताः सर्वे]

(यवनिका)

(इति चतुर्थोऽङ्कः)

## अथ पञ्चमोऽङ्कः

[ततः प्रविशति सुबन्धुः]

सुबन्धुः—नेतृब्रुवाणां विघटय्य कार्यं
मूकीकृताः छात्रविनिन्दका ये ।
महोत्सवे मालविकाप्रयोगः
संपादितः सर्वसुखावहश्च ॥

अथ अद्य सुसंपन्ने कालिदासव्याख्याने सर्वमेव भविष्यति सुसमाप्तम् । तत्प्रथमं तावत् सूत्रधारिणीं भगिनीमाहूय प्रष्टव्यमेव सर्वसिद्धता जाता न वेति । भगिनि सूत्रधारिणि,

सूत्रधारिणी— (प्रविश्य) सुबन्धो किमर्थमहमाहूता ?

सु०—व्याख्यानसिद्धताविषये प्रष्टुम् ।

सू०—सर्वमेव सुसज्जम । सभास्थानं श्रोतृभिः पूर्णप्रायमेव । अल्पान्येव स्थानानि रिक्तानि । मन्ये निश्चितवेलायाः प्राक् तानि अपि अशून्यानि भविष्यन्ति । कस्मिन्नपि विषये न कार्या चिन्ता । किंतु सुबन्धो ! कथय कोऽद्य अध्यक्षपदमलंकरिष्यति ?

सु०—न कोऽपि । अनध्यक्षैव सभा अद्यतना ।

सू०—किमर्थम् ?

सु०—अध्यक्षेण व्याख्यातुरपेक्षया विद्वत्तरेण भाव्यम् । न पश्यामि कंचिदेवं कालिदासाद्विद्वत्तरम् । अतः अनध्यक्षमेव व्याख्यानमद्य ।

सू०—कुत्रकुत्रचित् व्याख्यातुः समकक्षः किंचिदूनोऽपि भूषयत्येव अध्यक्षपदम् ।

सु०—तदेव भवति अनर्थावहम् । पश्य

अध्यक्षो यः पण्डितं मन्यते स्वं
व्याख्यानान्ते किंचिदेष ब्रवीति ।
व्याख्यानार्थः तेन चेत् खण्डितः स्यात्
सर्वो भूयात् कज्जलेनावलिप्तः ॥

न विद्यते अवसरः व्याख्यातुस्तन्निराकरणाय । अतः श्रोतॄणां चित्ते तदेव तिष्ठति यदध्यक्षेण अन्ते प्रतिपादितम् । सुन्दरे चित्रे कज्जललेपनमिव भवति तत् । अद्य अतो न कोऽपि अध्यक्षः, न कश्चिदुपवक्ता । केवलं व्याख्यानमेव । भवतु, गच्छ, पश्य च सर्वमहीनमिति । अहमपि व्याख्यातारं मञ्चं प्रापयितुं गच्छामि । [निष्क्रान्तौ उभौ]

(इति विष्कम्भकः ।)

[नेपथ्ये श्रूयते 'नारायण' 'नारायण' इति सतन्त्रीरवः सकरतालनादः ध्वनिः]

[ततः प्रविशति ऊर्ध्वशिखः, त्रिपुण्ड्रधारकः, यज्ञोपवीती, सोत्तरीयः, वल्लकीस्कन्धः, करकरतालः, पीताम्बरः, सपादुकः, नारदः कालिदासद्वितीयः]

नारदः—सभ्याः ! ह्यः अहमासम् नारदब्रुवः । सर्वैर्युष्माभिः नारद इति संमानितः । अतः मया चिन्तितं किमर्थमद्याहं भवतां पुरतः नारदवेषेण एव नाऽऽगमिष्यामीति । अत एव मया धृतोऽयं वेषः नारदस्य युष्मत्परिचितः । अयं मे प्रियसुहृत् कालिदासनामा स्वभावादेव कातरः, स्वप्रौढिपराङ्मुखः प्रमादेनापि स्ववर्णनमकुर्वाणः भवद्भिः सर्वैः व्याख्यातेति वृतः । सोऽत्र मया हस्तग्राहमानीतः । पश्यत पश्यत इमं व्याख्यातारम् ।

[कालिदासः सत्रपः अधोवदनः]

[जनान्तिकम्] मित्र कालिदास, नववधूरिव मा लज्जस्व । पर्यवस्थापय आत्मानं यावदहं श्रोतॄणां चित्तं स्थिरीकर्तुं यते । [प्रकाशम्] भो भोः समागताः सभ्याः श्रोतारः ! नवीनां सरणिमनुसृत्य प्रथमं तावत् मौन-प्रार्थना कर्तव्या । आरम्भे अहं ॐ इति अक्षरमुच्चार्य विलम्बितमुच्चैः कृत्वा शनैः शनैः तं स्वरं नीचैः करिष्यामि, अन्ते च मौनं धारयिष्यामि । मौनं धरति मयि सर्वे दीपाः निर्वाणं यास्यन्ति । निमिषद्वयपर्यन्तं तस्मिन्नेवान्धकारे सर्वैः मौनमाश्रित्य, स्वचित्तं स्थिरीकृत्य स्वस्वदेवताध्यानं कर्तव्यम् । सद्विचारार्थं च प्रार्थना कर्तव्या । निमिषद्वयावसाने पुनरपि ॐ इति नीचीनात्स्वरादारभ्य शनैः शनैः तं स्वरं तारं करिष्यामि । उत्थिते तारस्वरे पुनः प्रकाशो भविष्यति । हुं ओ३म् ।

[यथावर्णितमौनानन्तरम् ]

भो कविवर! अद्य यथाहं नाट्येन नारदः तथैव भवान् कालिदासः। अभिनयाव आवां यत्

स्वर्गादावामुज्जयिन्यां प्रविष्टौ
छात्रा दृष्टाः पाठशाला च दृष्टा ।
श्रोतव्यं यत् सर्वमेव श्रुतं तद्
दृश्यं दृष्टं, शिष्टमस्तीह भाष्यम् ॥

तत्तु त्वया कर्तव्यम् । व्याख्यानसमयः संजातः। न कोऽपि अत्राध्यक्षः। अहं व्याख्यातृसखः । अहमासने उपविशामि। तिष्ठतैव त्वया व्याख्यानं कर्तव्यम् ।

कालि०—[स्मितं कृत्वा] यदि भगवान् न अध्यक्षः किंतु व्याख्यातुः सखा, तर्हि मयि व्याख्यातरि तिष्ठति कथं भवानासनपरिग्रहं कर्तुमर्हति। द्वावप्यावां तिष्ठन्तौ एव संभाषणं कुर्वः। तत्सम्भाषणमेव व्याख्यानं भविष्यति ।

नारदः—किंतु नैषा व्याख्यानपद्धतिः ।

कालि०—किमियं पद्धतिः कस्यांचित् स्मृत्यां समाविष्टा?

नारदः—किंतु द्वाभ्यां व्याख्यानमित्यपि नियमः न कुत्रापि लिखितः।

कालि०—न केवलं लिखितः, अपि तु प्राचीनकालान्महापुरुषैरनुसृत एव ।

नारदः—कुत्र?

कालि०—भगवन्! देवप्रियो भगवान् न देवानांप्रियः। तथापि यदि अज्ञानेनावृतमात्मानं दर्शयिष्यसि तर्हि भगवते भगवद्गीताया एव स्मरणं दास्यामि । यदि एकाकी कृष्णः अविच्छिन्नेन भाषणेन गीतातत्त्वव्याख्यानमकरिष्यत्, तत् व्याख्यानमर्जुनमनःपरिवर्तनाय नालमभविष्यत् । अतः व्याख्यानस्य इष्टपरिणाम इष्यते चेत्, एकेनैव पुरुषेण व्याख्यानं न

दातव्यम् । एकेनैव स्वरेण एकस्यैव व्याख्यानं विरसतामावहेत् । अतः अद्य सुमुहूर्ते कृष्णार्जुनयोः उदाहरणमनुसृत्य आवां व्याख्यानस्य संवादसरणिं प्रवर्तयावः । केवलमिदमेवान्तरं यद् गीताव्याख्याने भगवान् श्रीकृष्णो गुरुः, अर्जुनश्च शिष्यः, अत्र भगवान्परीक्षकः अहं परीक्ष्यः छात्रः । भगवता प्रष्टव्यं मया तु उत्तरं दातव्यम् । पृच्छतु भगवान् प्रथमं प्रश्नम् ।

नारदः—[स्मितं कृत्वा] त्वया किंचिदपि अद्यापि नोक्तम् । अनुपक्रमे एव कथं प्रश्नः? आरभस्व व्याख्यानम् । ततः आवश्यकं प्रश्नं प्रक्ष्याम्येव ।

कालि०—[श्रोतृसमाजाभिमुखीभूय नमस्कृत्य]

नमः कालिकायै महाशक्तिकायै
विशालापुरीशप्रियायै जनन्यै ।
त्वदीयप्रसादान्महामन्दबुद्धिः
भवत्येव लोके कविः कालिदासः ॥

सभ्याः! अहो भाग्यमस्य कालिदासस्य अद्य, यत् कालिदासजन्मस्थाने कालिदासजयन्तीमहोत्सवे कालिदासप्रेक्षागृहे तस्य किञ्चित् कथयितुं प्राप्तः अवसरः ।

नारदः—[श्रूयताम् श्रूयताम् इति करतलध्वनिं करोति]

कालि०—[आत्मगतम्] नहि, नहि इति कथयतापि मया कृत एव व्याख्यानोपक्रमः । भवतु अन्यत ओघं नयामि । [प्रकाशम्] भगवन् कथय किं कथयामि?

लोके ख्याता या विशाला पुरीयम्
प्राज्ञैः पूर्णा सूरिभिः पण्डितैश्च ।
एषामग्रे मादृशो नैव शक्तः
किञ्चिद्वक्तुं मौनमेवाश्रयेऽतः ॥

नारदः—आयातः पुनर्वेतालः पूर्वं स्थानम् । कविवर मा वद, मा वद । किन्तु कथय कस्मिन्समारोहे वयमत्र संमिलिताः?

कालि०—कालिदासमहोत्सवसमारोहे ।

नारदः—किं रोचते ते एष समारोहप्रकारः?

कालि०—न रोचते ।

नारदः—किं कारणमरुचेः?

कालि०—न रोचते मे व्यक्तिमाहात्म्यप्रदर्शनम् ।

नारदः—एतेऽपि कालिदासव्यक्तिं न स्तुवन्ति । व्यक्तिमाहात्म्यस्य समयः गत एव सर्वैः राजभिः सह भारतात् । पश्य किं क्रियते एभिरेषु समारोहेषु । व्यक्तिरूपस्य कालिदासस्य प्रशंसायामपि न क्रियते सा कालिदासरूपस्य । एते तु वर्णयन्ति तस्य व्यक्तेः कृतीः । कुत्र तस्य नाटकान्यभिनीयन्ते, कुत्र तस्य काव्यस्य चर्चा क्रियते । कुत्र कुत्र यत् कालिदासस्य स्वप्नेऽपि नागतं स्यात्, तद्धठात् तस्य शब्देभ्यः आकृष्य स्थाप्यते । यदि न रोचते ते एषः प्रकारः, कथय केन प्रकारेण कर्तव्यः अयं महानुत्सवः?

कालि०—भगवन् व्यक्तेः स्थाने कृतिषु स्थापितास्वपि एतद्विशेषमाहात्म्यमेव भवति, न सामान्यमाहात्म्यम् । यतो वराकः कालिदास एक एवासीत् । कति वर्तन्ते तस्य प्रसिद्धाः कृतयः? एकं खण्डकाव्यं मेघदूतनामकम्, द्वे महाकाव्ये रघुवंशकुमारसंभवनामनी, त्रीणि नाटकानि मालविकाग्निमित्र-विक्रमोर्वशीय-शाकुन्तलसंज्ञकानि । एतासां षण्णां कृतीनां माहात्म्यं कियत्कालं स्थास्यति? अचिरादेव पुनः पुनः तासां विवरणेन तत्रागमिष्यति पर्युषितत्वम्, तन्मूलकं च वैरस्यम् ।

नारदः—तर्हि किं कर्तव्यम्?

कालि०—प्रथमं तावत् कालिदासः सर्वश्रेष्ठ इति कल्पना एव चित्तान्निःसार्या ।

नारदः—किं कथयसि कविवर! कालिदासो न सर्वश्रेष्ठ इति ।

कालि०:—अथ किम् । तस्मिन् काले तस्मिन् देशे स्यात् कदाचित् कालिदासः सर्वश्रेष्ठः । किंतु स सर्वदा तथैव स्थास्यति इति कल्पना हास्यास्पदा, निरवधेः कालस्य विस्तीर्णायाः पृथिव्याश्च अवमान-कारिका । यतः

अपार एष संसारे स्वाभिमानो वृथा भवेत् ।
न ज्ञायते किं किमासीत् अस्ति किं, किं भविष्यति ॥

अतः कस्मिंश्चित् काले, कस्मिंश्चिद्देशे आसीत् कश्चन श्रेष्ठः इत्येव कथनं परमार्थतः सत्यम् । अन्यत्सर्वमसत्यमेव ।

नारदः—किंतु एवम् उत्सव एव अनावश्यको भवेत् ।

कालि०—न भगवन्! न । उत्सवप्रियाणां नराणां जीवनाद्विरते उत्सवे तज्जीवनमेव नीरसं स्यात् । किंतु य उत्सवः कर्तव्यः स कस्या अपि विशिष्टव्यक्तेः न कृत्वा सामान्यतया कार्य इति मे भावः ।

नारदः—दृश्यते ते विचारः सारवान् । तथापि स्पष्टमधिकं कुरु ।

कालि०—आद्याक्षरेणैव संपूर्णशब्दं जानते भगवते न वर्तते किंचिदस्पष्टम् । तथापि जनहितार्थं पृच्छते भवते स्पष्टीकरिष्यामि ।

नारदः—कुरु तथैव ।

कालि०—गृह्णातु भवान्कालिदासस्यैव उदाहरणम् । कालिदासः कविरिति प्रसिद्धः । तस्मात् भवतु कालिदासमहोत्सवः कविमहोत्साहरूपेण ।

या या भाषाः सुविज्ञाता अस्माभिः पठिताश्च याः ।
तासु तासु च भाषासु ये ये सन्ति च सूरयः ॥

तेषां सन्तुलनां कृत्वा भिन्नेषु विषयेषु च ।
प्राप्ता ये सन्ति निष्कर्षाः संस्थाप्याः पुरतः सताम् ॥

एवं कृते न वैरस्यं कस्मिन् कालेऽपि संभवेत् ।
नवीनत्वान्नवीनत्वात् काव्यानां सर्वदैव हि ॥

नारदः—किंतु तेन कदाचित्कस्मिन्विषये कालिदासः निकृष्ट इत्यपि निष्कर्षः संभवेत् ।

कालि०—का हानिः? ज्ञानस्य क्षेत्रं प्रतिदिनं विस्तृतमेव भवति । तेन प्राचीनज्ञानम् अद्यतनात् ज्ञानात् यदि संकुचितं दृश्यते न किमपि अत्र अस्वाभाविकम् । विचारयाम खलु कालिदासस्योपमाक्षेत्रमेव । 'उपमा कालिदासस्य' इति सर्वैः एव मुक्तकण्ठं प्रशस्यते । किं तु विद्यन्तेऽद्य बहवः अर्थाः ये कालिदासेन न श्रुताः नैव दृष्टाः न चापि अनुभूताः । किंतु न कोऽपि कथयिष्यति यत्तेऽर्था इदानींतनैः कविभिः स्वकाव्येषु न प्रयोक्तव्या इति । 'उपमा कालिदासस्य' इति स्तुवतो विदुषः अयमेवाभिप्रायः यद्ये विषयाः कालिदासस्य पुरत आसन्, तेभ्यः वर्ण्यविषयस्पष्टीकरणाय ते सूक्ष्मया सौन्दर्यदृष्ट्या उपयोजिता इति । सैव सूक्ष्मा सौन्दर्यदृष्टिः अद्यतनैः कविभिः प्रयुक्ता चेत्, तेषामुपमा कालिदासस्योपमातोऽपि शोभनतरा भवितुं शक्या इति अत्र न वर्तते मम कोऽपि संदेहः । सर्वमेव सुन्दरं भवितुमर्हति स्वस्वसमये ।

बीजाद्यथा स्याल्लघुरङ्कुरश्च
स शोभितः स्यान्नवपल्लवैश्च ।
कालेन पुष्पैश्च फलैश्च पूर्णः
छायान्वितोऽन्ते स भवेद्धि वृक्षः ॥

नारदः—साधु रे कालिदास साधु । पश्य पश्य ते व्याख्यानेन—नहि नहि संभाषणेन कथं चित्रार्पितमिव श्रोतृबृन्दम । अधिकं कथय किंचित् येन चातका इव ऊर्ध्ववदनाः श्रोतारः तृप्तिं यास्यन्ति ।

कालि०—न न इति कुर्वतापि मया बहु भाषितम् । प्रतिपादन-वशाद्विस्मृतमेव मया व्याख्यानं न कर्तव्यमिति । किमधिकं कथनीयम् ?

नारदः—कवे, किं न मन्यसे तव प्रतिपादनदिशा यस्य कस्यापि विषयस्य तस्मिन्नुत्सवे अन्तर्भावो भवेत् । एवं कृते किं स उत्सवः अतिव्याप्तः न भवेत् । अधुना तव मतेन संकुचित उत्सवः । परंतु त्वन्निर्दिष्टां सरणिमनुसृत्य तस्य विस्तारोऽमर्यादो भविष्यतीति मन्ये । तर्हि कथय कश्चित्सुवर्णमध्यम् ।

कालि०—मया दिङ्मात्रं दर्शितः काव्यविषयः मर्यादयितुं शक्यः । कालिदासस्य एकं खण्डकाव्यमपि गृहीत्वा बहवो विचाराः कर्तुं शक्याः । कालिदासात्प्राक्, तस्य पश्चाद्वा संस्कृतभाषायां तथैव अन्यभाषासु भारतीयासु यूरोपीय-भाषासु वा कानिकानि खण्डकाव्यानि जातानि, तत्र 'कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु' इति मया [इति अर्धोक्ते] नहि नहि—कालिदासेन [इति अर्धोक्ते]

नारदः—कथय निर्भयं त्वया मयेति । किं मया आदावेव न कथितं यदद्य भवान् कालिदासभूमिकायां वर्तमान इति । तस्मान्मयेत्युक्ते न कापि क्षतिः ।

कालि०—कालिदासेन कथितं सिद्धान्तम् अनुगम्य दूतकर्मणि कामिजनैः केके चेतना अचेतना वा नियुक्ताः, दूतमुखेन किंप्रकारकाः संदेशाः प्रेषिताः, तत्र को विशेषः कालिदासस्य के अन्येषां वा, इति सर्वमेव प्रतिपादयितुं शक्यम् । किं बहुना । सर्वथैव संकुचितां स्वनिर्भरामेव वृत्तिं परित्यज्य विशालया सार्वदेशिकया दृष्ट्या सर्वस्यानुशीलनं करणीयम् । अत्रभवतां विदुषां पर्याप्त एक एव शब्दः, मया तु केवलः प्रदर्शितः पन्थाः ।

न कथयामि वेदवाक्यमिव 'नान्यः पन्था अयनाय विद्यते' इति । अपितु कथयामि—'स्वर्गं सर्वे यान्ति पन्थान एव' । भगवन् अधिकं वक्तुं नोत्सहे ।

**नारदः**—सुविचाराणां दुर्भिक्षेऽस्मिन् आकण्ठं भोजनदानं न युक्तम् । कदाचित्तेन अजीर्णमपि संभवेत् । तस्मात् यथा व्याख्यानस्य उपक्रमः कृतः तथा कर्तव्य उपसंहारः । मा प्रेक्षस्व ममैव मुखम् । श्रोतृवर्गस्याभिमुखीभूय वद यद्वक्तुकामोऽसि ।

**कालि०**—[तथा कृत्वा] अयि विशालानिवासिनः सज्जनाः छात्राश्च ! युष्मत्संपादितमिमं कालिदासोत्सवं दृष्ट्वा महानानन्दो जातो मे मनसि । महोत्सवविषयकाः मम—नहि नहि—आवयोः विचाराः सावधानेन मनसा भवद्भिः सर्वैः श्रुताः इति अयं मम सुहृन्नारदः अहं च बलवदनुगृहीतौ स्वः । एषु यद्रोचते तद्ग्राह्यं यन्न रोचते तत् त्याज्यम् ।

मया यन्मतं मे तदग्रे धृतं च
श्रुतं शान्तचित्तैर्भवद्भिश्च सर्वैः ।
अयोग्यं यदि स्याद् विचार्य स्वचित्ते
क्षमा तत्र कार्या, जनो याचतेऽयम् ॥

[नेपथ्ये करतलध्वनिः]

**नारदः**—अनेन करतलरवेण ज्ञायते यत् स्वीकृता ते प्रार्थना । अथ एकमेव कार्यमवशिष्टम् । तच्च सभाविसर्जनम् । तत् कृत्वा आवामन्तरितौ भवावः । अयि सभ्याः !

[इत्यर्धोक्ते एव अपटीक्षेपेण प्रविश्य]

[एकतः सुबन्धुः, अन्यतः सूत्रधारिणी च]

**उभौ**—[युगपदेव]

न खलु न खलु कार्यं पूर्णतां यातमद्या-
 प्यवसितमिह भाष्यं, शिष्यते किंचिदन्यत् ।
किमिति यदि? वदावः पूज्ययोरेतयोर्नः,
 तरुणकुसुममालापूजनं प्रार्थना च ॥

सु०—अयि सभ्याः! उद्धूलितायां तस्यां सभायां सर्वत्र प्रवादः छात्राः उद्धताः केवलनाशकारिणः इति ।

सूत्र०—तदा आभ्यामेव महाभागाभ्यामुद्धृतः अस्मत्पक्षः, अस्मभ्यं छात्रेभ्यः दत्तं समाधानं, कार्यकरणे वयं सर्वे समुपदिष्टाः ।

सु०—तदनन्तरं छात्रैरस्माभिरनुशासनबद्धैः संपादितः श्वः मालविकाभिनयप्रयोगः । [स्मितं कृत्वा] अनेन देवर्षिणा नारदेन कथं वयमनुगृहीताः इति सर्वैरेव प्रत्यक्षीकृतम् ।

सूत्र०—अद्य च स्वविचारप्रदर्शनेन कालिदासमहोत्सवः कथं कार्य इत्यपि प्रतिपादितं [स्मितं कृत्वा] प्रत्यक्षमेव कालिदासेन ।

सु०—तदर्थमहमेतां कुसुममालां भगवतः कविश्रेष्ठस्य कालिदासस्य कण्ठे समर्पयामि ।

[इति तथा करोति । उच्चैः करतलध्वनिः]

सूत्र०—अहमपि एतां केवलतुलसीमञ्जरीमालां नारदकण्ठे प्रार्पयामि ।

[इति तथा करोति]

नारदः—[विहस्य] सूत्रधारिणि! न कयापि कुमार्या अद्यावधि मालां कण्ठे समर्प्य अहं सनाथीकृतः ।

सूत्र०—नेयं भगवन् प्रीतिपूर्वकं समर्पिता पुष्पमाला यस्या विषये शङ्का कार्या ।

नारदः—[पुनर्विहस्य] किं मयि न वर्तते ते प्रीतिः?

सूत्र०—भवादृशे पूज्यपुरुषे कथं संभवेत् प्रीतिः? भवद्विषयिका भावना न प्रीतिः अपि तु भक्तिः। इयं तुलसीमञ्जरीमाला न प्रीति-सूचिका अपितु भक्तिदर्शिका। तेन अलमन्यथा गृहीत्वा। एनां तुलसीमालां समर्प्य भवतः पादयोः भक्तिपूर्वकं प्रणमामि। [इति प्रणामं करोति]

नारदः—[कालिदासं प्रति] दृष्टं कथं प्रत्युत्पन्नमति स्त्रैणमिति। [सूत्रधारिणीं प्रति] बाले! अभिमतवरप्राप्तिरस्तु। [सुबन्धुं प्रति] कथय किं ते भूयः प्रियमुपकरोमि?

उभौ—यदि प्रसन्नो भगवान् एतदस्तु भरतवाक्यम्—

अग्रेऽग्रे गन्तुमिच्छूनां हितार्थं तन्निरोधिनाम्।
सङ्गतं युववृद्धानामस्तु प्रीतियुतं सदा॥

नारदः—तथास्तु।

(यवनिका)

इति पञ्चमोऽङ्कः॥

॥ कालिदासमहोत्साहं नाम नाटकम् समाप्तम् ॥

# सैरन्ध्री नाम प्रेक्षणकम्

देवकी मेनोन्

(१)

(नेपथ्ये गीयते)

मधुरमङ्गलमोहनविग्रहम्
परिलसत्तडिदम्बरमालिनम् ।
व्रजवधूजनपुण्यमहोदयम्
प्रणततापहरं हरिमाश्रये ॥

आसीद्भोजपतेर्दासी मधुरायां तपस्विनी ।
त्रिवक्रत्वात्स्वकायस्य त्रिवक्राख्यां गता हि सा ॥

गात्रे गतापि वक्रत्वं दुष्कृतेनान्यजन्मनि ।
ऋजुत्वं मनसा वाचा कर्मणा चाभजत्स्थिरम् ॥

नियुक्ता भोजराजेन ह्यनुलेपनकर्मणि ।
स्वकर्मनिरता नित्यं धराधिपमसेवत ॥

कर्मणा मधुरानाथभुजिष्यात्वं गतापि सा ।
मनसा देवकीसूनुं प्रपेदे मधुराजनिम् ॥

समाप्य दैनन्दिनकृत्यमेषा
सम्पूजयामास मनोहरं तम् ।
बृन्दावनं गोपकुलैस्समेतं
सम्मोहयन्तं मुरलीस्वनेन ॥

(मधुरायां सैरन्ध्रयाः त्रिवक्रायाः आडम्बररहितं भवनम् । ततः प्रभाते प्रविशति कुब्जा सैरन्ध्री । स्वयं लिखितस्य चित्रफलके मुरलीधरस्य भगवतः रूपमभिवन्द्य गायति ।)

(गानम् - कापिरागेण आदितालेन)

पाहि मुकुन्द माम् अनाथाम् ।
पाहि मुकुन्द माम् अनाथाम् ॥

पाहि मुकुन्द माम् ।

पाथेयं ते पादस्मरणम् ।
जीवितपथे मे खेदहरणम् ॥

पाहि मुकुन्द माम् ।

भवजलधौ ते भक्तिरमोघा ।
भवतु हरे मे सुलभा नौका ॥

पाहि मुकुन्द माम् ।

संसृतिबन्धविमोचनचरित ।
सङ्कटमोहनिवारणनिरत ॥

पाहि मुकुन्द माम् ।

व्यालराक्षसदुर्मदनिग्रह ।
पालय जलदश्यामलविग्रह ॥

पाहि मुकुन्द माम् ।

(ततः प्रविशति सैरन्ध्र्याः सखी निकटगृहस्था सुशीला नाम गेहिनी ।)

**सैरन्ध्री**—सखि स्वागतं ते ।

(आसनं निर्दिश्य)

अत्रोपविश्यताम् ।

**सुशीला**—(उपविश्य)

सखि, ते गीतरागेणाकृष्टाहमत्रागता । त्वया चित्रलिखितस्य श्यामल-कोमलस्य नन्दकुमारस्य स्तुतिः निरर्गलप्रवाहेण मधुररागेण गीता भक्तिरसे निमज्जयति श्रोतॄणां मनांसि ।

**सैरन्ध्री**—सखि, निरर्गलमिति यदुक्तं त्वया तत्सत्यमेव । विरलवाङ्मतिविभवा अशिक्षिता यद्यपीयं सुकुमारकलासु, तथापि मञ्जुल-विग्रहस्यारविन्दलोचनस्य मनोहरलीलाविलासान् हृदि विभावयन्त्याः मे तूलिका चित्रकर्मणि, रसना च तद्गीतसरण्यां यथेष्टं प्रवर्तेते ।

सुशीला—श्लाघनीया ते जीवितचर्या। सखि! अस्ति मे जिज्ञासा। कथं नु ते अदृष्टपूर्वस्यापि गोकुलकुमारस्य विभावनाशक्तिरुत्पन्ना?

सैरन्ध्री—सखि श्रूयताम्। भोजनृपतेर्नित्यमङ्गविलेपनवाहिन्याऽसकृद्राज्ञ्श्चारमुखात् श्रुतानि मया यशोदातनयस्य मायाचरितानि सम्मोहनानि, यैराप्लावितोऽनवरतमानन्दसागरे नन्दव्रजः। मुकुन्दलीलाः श्रावंश्रावं भावनाशक्तिर्मयोपलब्धा।

सुशीला—लोकोत्तरमधुराकृतिप्रकृतौ किशोरे भागिनेये विद्वेषकलुषितमतिर्जातः महाराज इति विधेः प्रभाव एव सूचितः।

सैरन्ध्री—विपरीता हि दैवगतिः। यथा महाराजः कृष्णभीत्या सदा तत्स्मरणः संवृत्तः, तथाहं राजदासी तत्प्रेम्णा अजस्रं तद्गतमानसैव जाता।

(समन्दस्मितम्)

सुशीला—सखि, भीरोः कामिनश्च मनोवृत्तेरेकदेशसाम्यं विद्यत एव।

सैरन्ध्री—सखि, गोपवधूनां सौभाग्यमसूयावहमेव, यन्मायामानुषविग्रहस्य भगवतः केलीरङ्गे नन्दव्रजे सुलभगोविन्दसमागमास्तास्संवृत्ताः। मन्ये व्रजस्त्रियस्ताः न केवलं मानुष्यः परंतु देवाङ्गना एव भुवमागता ह्युपसेवितुमच्युतमिति।

(सविषादम्)

सखि, अकृतपुण्याहं तु सदा कृष्णगतमानसा कदा वा सकृदपि भगवद्दर्शनावसरं लभेय इति चिन्तया उत्ताम्यामि।

(नेपथ्ये)

अचिरादचिरात्।

सैरन्ध्री—(कर्णं दत्वा) सखि, शुभोदर्कं वचनं श्रूयते। त्वरितं गत्वा ज्ञायतां का वार्तेति।

सुशीला—तथा।

(इति निष्क्रान्ता)

(पुनः प्रविश्य)

सुशीला——सखि, दिष्ट्या वर्धसे । पौराः सहर्षमुद्घोषयन्ति अचिराद्रामकेशवावागमिष्यतः मधुरापुरीमिति ।

सैरन्ध्री——सखि, प्रियं मे ।

सुशीला——मया पृष्टास्ते एवमाहुः । महाराजेन कंसेन राजधान्यां प्रवर्त्यमानधनुर्मखनिरीक्षणाय राममाधवावानेतुं नन्दव्रजं प्रेषितेनाक्रूरेणानीतौ कुमारावद्यापराह्ववेलायां पुरः प्रवेशं कुर्यातामिति ।

सैरन्ध्री——मुदितास्म्येतद्वार्तया । परंतु, सखि बलकेशवदर्शनोत्सुकैः पौरैर्निबिडिते राजपथे कथं वा दुर्बलाहं कुब्जा मुकुन्दं द्रष्टुं पारयामीत्याकुलितं मे मनः ।

सुशीला——यथाहं पश्यामि, अस्थाने ते विषादः । महाराजस्याङ्गानुलेपनहेमभाजनहस्तां त्वां राजादरेण को वा वारयेद्राजवर्त्मनि ?

सैरन्ध्री——सखि तथापि जनसम्मर्दे मार्गे नाहमेकाकिनी गन्तुमुत्सहे ।

सुशीला——सखि, मा विषीद । त्वया सहाहं यास्यामि । ममाप्यस्ति कौतूहलं कुमारदर्शने । तत्सखि, गृहकार्याणि त्वरितं निर्वर्त्य सहितै यास्याव आवाम् । साधयाम्यधुना ।

सैरन्ध्री——आश्वस्ताहम् । न केवलं मे प्रियसखी त्वं, परंतु यथार्थनाम्नी सुशीला च ।

(निष्क्रान्ते)

(२)

(मधुरायां राजपथः)

(नेपथ्ये)

अथापराह्णे भगवान् कृष्णः सङ्कर्षणान्वितः ।
दिदृक्षुर्मधुरां गोपैः प्राविशत् परिवारितः ॥

तां सम्प्रविष्टौ वसुदेवनन्दनौ वृतौ वयस्यैर्नरदेववर्त्मना ।
द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुस्तदुत्सुकाः ॥

(ततः प्रविशति सखीसहाया शीतलपरिमलोद्गार्यङ्गविलेपनपूरितहेमभाजनहस्ता सैरन्ध्री । ते परिक्रामतः ।)

सुशीला—(करेण निर्दिशन्ती) सखि, प्रेक्षस्व इमाः प्रासादाधिरूढाः पुरस्त्रियः अक्षमा दृश्यन्ते नन्दकुमारप्रेक्षणसमुत्सुकाः । अविदूराच्च श्रूयते पौरजनकोलाहलः । तद्राममाधवावचिराद्द्रक्ष्यावः ।

सैरन्ध्री—सखि कातराहं जनसङ्कुलमार्गे गन्तुम् । तत्स्थानमिदं जनासङ्कीर्णमाश्रयाव, कुमारप्रेक्षणानन्दमनुभवितुम् ।

सुशीला—तथा । (द्वे तथा कुरुतः ।)

(ततः प्रविशन्ति प्रमुदिताः भक्ताः सम्मिलिताः करतालेन सह गायन्तः नृत्यन्तश्च)

(गानम् - यमुनाकल्याणीरागेण, आदितालेन)

रामसमेत कृष्ण—जय
रामसमेत कृष्ण—जय

पीताम्बर श्रीधाम जय जय
नीलाम्बर बलराम जय जय

रामसमेतकृष्ण

मन्मथकोटिप्रभापरिलसित
मङ्गलरूप मायाचरित

रामसमेत

गोपतारावृतचारुसुधाकर
योगेश्वर जगदीश कृपाकर

रामसमेत

मधुरालोकन मञ्जुलहसन
मधुरामोहन मुरलीवादन

रामसमेत

(निष्क्रान्ताः भक्ताः ।)

सैरन्ध्री—(आत्मगतम्) स्पन्दते मे दक्षिणेतरं नयनम्, येनाविलम्बितमनोरथसिद्धिः सूच्यते । अथवा किं वञ्चितास्मि नयनेन ।

(ततः प्रविशतः रामकृष्णौ पौरपरिवारितौ ।)

सुशीला—(करेण निर्दिशन्ती) सखि, प्रेक्षस्व, इमाः प्रासादाधिरूढाः प्रमदाः हर्षोत्फुल्लनयनाः अभिवर्षन्ति सुमनोभिः जनसमूहमध्यगतौ नन्दकुमारौ । किंतु पौरैर्निबिडं परिवारितौ न स्फुटं व्यज्येते ।

(सुशीला पुनरपि निरीक्षमाणा-सावेगम)

सखि प्रेक्षस्व प्रेक्षस्व, नयनोत्सवकरौ बलकेशवौ सुस्मेरवदनौ, सगोपालौ दर्शनपथं गतौ । भक्तजनाश्च तावर्चयन्ति स्रग्गन्धादिभिः ।

सैरन्ध्री—(निरीक्षमाणा-सविषादं) सखि, यद्यप्यायस्याम्यात्मानं तथापि हतभाग्याया मे त्रिवक्रायाः कुब्जायाः नोपलभ्यते निमेषदर्शनमपि पावनजन्मनोः कुमारयोः । अनन्ताः प्रेक्षकसमूहाः एव मे नयनयोः विषयीभवन्ति ।

सुशीला—मा विषीद, द्रक्ष्यस्यचिरात् नयनानन्दनौ कुमारौ ।

सैरन्ध्री—(आत्मगतम्) कुतो ह्येतावन्मे भागधेयम् ।

(किञ्चित् विलम्ब्य, प्रकाशम्)

सखि, अधुना किं प्रेक्षसे भगवन्तम् ?

सुशीला—नहि, मेघराजिषु विहरंश्चन्द्रमा इव ईषदीषद्दृश्यते, अकस्माच्च परोक्षं नीयते जनैघैः ।

सैरन्ध्री—हा धिक् । (इति बाष्पं विसृजति)

सुशीला—सखि, समाश्वसिहि ।

सैरन्ध्री—(सविषादं) सखि, सर्वथा विफलप्रयत्नाहं संवृत्ता मन्दभागिनी । एतस्मात् स्थानात् भगवद्दर्शनमसाध्यमेव मन्ये । मे राजधानी-गमनवेला च परिहीयते । राजकोपतः भीताहं नात्र स्थातुं पारयामि । यावत् गच्छामि । त्वं तावत् बलकेशवदर्शनानन्दममन्दमनुभूय प्रतिनिवर्त्तस्व ।

(कुब्जा मन्दंमन्दं सविषादं गन्तुं प्रवृत्ता)

सुशीला—(पुनरपि निरीक्षमाणा, सविस्मयम्) सखि एह्येहि । जनसमूहं विभिद्य इत एव अभिवर्त्तेते द्विपेन्द्रगमनौ बलकेशवौ । मन्ये सर्वान्तर्यामी मुकुन्दः भक्तायास्ते सम्यक् दर्शनदानाय कृतमतिरिति ।

(भगवान् सरामः त्वरितगतिः कुब्जाम् उपयाति । सुशीला तयोः पादयोः प्रणिपत्योत्तिष्ठति)

सैरन्ध्री—(विलेपनभाजनं सखीहस्ते दत्वा सहर्षाश्रुनयना बद्धाञ्जलिः)

प्रसीदतां मे सर्वमङ्गलविग्रहौ भगवन्तौ । (सगद्गदम्) अकृतपुण्यायाः मे अङ्गवैकल्यात् शिरसा मे भगवत्पादारविन्दस्पर्शनं प्रतिषिद्धं दैवेन ।

कृष्णः—(सस्मितम) पृच्छामि किञ्चित् भवतीम् ।

सैरन्ध्री—भगवन्, अनुग्रह एव प्रश्नः ।

कृष्णः—का त्वं वरोर्वेतदिहानुलेपनम्
कस्याङ्गने वा कथयस्व साधु नः ।
देह्यावयोरङ्गविलेपमुत्तमं
श्रेयस्ततस्ते न चिराद्भविष्यति ॥

सैरन्ध्री—दास्यस्म्यहं सुन्दर कंससम्मता
त्रिवक्रनाम्नी ह्यनुलेपकर्मणि ।
मद्भावितं भोजपतेरतिप्रियं
विना युवां कोऽन्यतमस्तदर्हति ॥

(कुब्जा सहर्षं राममाधवौ स्वस्ववर्णेतरशोभिना अङ्गरागेणानुरञ्जयति । कुमारौ मिथः प्रेक्ष्य प्रीतिं प्रकटयतः)

**कृष्णः**—(स्मेरवदनः) अङ्गने शुभकर्मणः सद्यः फलं ते ददामि ।

**नेपथ्ये**—आक्रम्य प्रपदे पद्भ्यां द्व्यङ्गुल्युत्तानपाणिना ।
प्रगृह्य चुबुकेऽध्यात्ममुदनीनमदच्युतः ॥

(कृष्णः कुब्जायाः शरीरं यथावर्णितं स्वकराभ्याम् उन्नमयति । कुब्जा सद्य एव परिहृताङ्गवैरूप्या प्रमदोत्तमा भूत्वा हर्षाश्रूणि विसृजन्ती भगवतः पादयोः पतति । भगवांश्च तामुत्थापयति । भक्तजनाश्च भगवत उपरि पुष्पवृष्टिं कुर्वन्ति ।

**सैरन्ध्री**—(भक्तिनम्रा बद्धाञ्जलिः)

भगवन् करुणासागर, भक्तकल्पतरो,

त्वं मे माता पिता चैव त्वं मे बन्धुः सखा प्रियः ।
त्वं मे विद्या धनं चैव त्वं मे प्राणाः परा गतिः ॥

(निष्क्रान्ताः सर्वे)

(मङ्गलम्)

मुग्धेन्दुवक्रोक्तिविलासभावै-
र्योऽनन्दयद्गोपवधूः कुमारः ।
भक्ताङ्गवक्रत्वमपाहरद्यः
पायात्स नो दुर्मतिवक्रतायाः ॥

# श्रीकुलशेखरसूरेः भगवन्निद्राप्रार्थनारूपा गाथाः*

**अनु० टि. एस्. श्रीनिवासाचार्यः**

१. मन्नुपुकऴ्

आशाविश्रुतकीर्तिकोसलसुतादिव्योदरद्योतकृत्
लङ्काधीश्वरमौलिभञ्जन ! महावप्रैर्दृढैः काञ्चनैः ।
संरुद्धे परितस्तु कृष्णनगरे मन्नीलदीप्यन्मणे !
मद्भोग्यामृत ! दिव्य ! राघव ! विभो ! निद्रां भजेथाः सुखम् ॥

२. पुण्डरीकमलर्

नाभीसम्भवपुण्डरीककुसुमे सर्वावनीसर्गकृत्
मग्नान्कर्कशताटकोरसि शरान्कर्तुं धनुर्नामन ! ।
सन्द्रष्ट्रर्पितमानसासितमणे ! श्रीकृष्णपुर्यां लसन् !
दिक्षु व्याप्तभुजिष्य ! राघव ! विभो ! निद्रां भजेथाः सुखम् ॥

३. कोङ्गुमलि

गन्धिश्यामळकेशकोसलसुतासद्वंशजातार्भक !
श्रीमन् ! दाशरथे ! यशश्चयलसद्वैदेहकन्यापते ! ।
गङ्गातीर्थसुपावनाम्बुभरितश्रीकृष्णपुर्यां लसन्
मद्वंश्यामृत ! नीलमामकमणे ! स्वप्यास्सुखं राघव ! ॥

४. तामरैमेल्

फुल्ले तामरसे प्रसूतविबुधश्रेष्ठ ! प्रभो ! मैथिली-
भर्तः ! पङ्क्तिरथस्य कोसलपतेर्विश्वेड्यडिम्भोत्तम ।
गीतैः कृष्णपुरे द्विरेफरचितैः कीर्णे लसन्मन्मणे !
बाणप्रेरकतीक्ष्णचापवरभृत् ! स्वप्यास्सुखं राघव ! ॥

---

* आल्वारभिधेषु वैष्णव-दिव्यसूरिषु अन्यतमैः कुलशेखरभूपालैः गीते द्रविडगाथा-प्रबन्धान्तर्गते 'पेरुमाल्-तिरुमोलि'-नाम्नि प्रबन्धे अष्टमं दशकमिदमनूद्य दत्तमत्र ।

श्रीकुलशेखरसूरेः भगवन्निद्राप्रार्थनारूपा गाथाः

५. पाराळुम्

दत्वा स्वां भरताय संपदमहो सर्वां नृपेन्द्रोचितां
प्राप्तः! स्वीयदवीयसा निरवधिप्रेम्णा वनं दुर्गमम् ।
वीरश्रीविलसद्भुजान्तरयुत! श्रीकृष्णपुर्यां नृप!
श्रीमद्दाशरथे! क्षितीशमुकुटालङ्कार! निद्राहि भोः! ॥ ५ ॥

६. शुर्रमेल्लाम्

सर्वैर्बन्धुजनैस्तवानुगमने व्यग्रैर्वनं जग्मिवन्!
त्वद्विन्यस्तभरौघभेषज वरा(र! अ)योध्यानगर्याः पते! ।
अभ्यस्ताखिलविद्यसूरिनिलय श्रीकृष्णपुर्यां मणे!
श्रीरामा(म! अ)वरमातृवाक्यनिरत! स्वप्यास्सुखं राघव! ॥

७. आलिनिलै

प्राप्य प्लक्षदळाधिशायिशिशुतामन्तर्निगीर्णावने!
हत्वा वालिनमाहवे तदनुजे विन्यस्ततद्राज्यधूः! ।
कुल्यानुन्नमणिप्रतीरसुभगश्रीकृष्णपुर्यां मणे!
श्रीमन्नालिपुराधिनाथ! सुसुखं निद्राह्ययोद्धयापते! ॥

८. मलैयतनाल्

बद्ध्वा सेतुमथाद्रिभिर्वरणयुग्लङ्कापुरीनाशकृत्!
लोलं वारिनिधिं विलोड्य कृपया देवाय दत्तामृत! ॥
विद्यापारगपण्डिताग्र्यनिलय श्रीकृष्णपुर्यां लस-
द्धन्विन्! मेचकरत्न! वीर्यभरित! श्रीराम! निद्राहि भोः ॥

९. तळैयविळुम्

गन्धस्यन्दिसुकेशपङ्क्तिरथसद्वंश्याग्र्यडिम्भ! प्रभो!
चापेनानमितेन सालवरभृल्लङ्कापुरीनाशन! ।
क्षेत्रप्रोद्भृतफुल्लहल्लकलसच्छ्रीकृष्णपुर्यां मणे!
श्याम! स्वानुजदर्शितस्वदय! भोस्स्वप्यास्सुखं राघव! ॥

१०. तेवरैयुम्

देवानां दितिजन्मनां च ककुभामन्तर्दिशां सर्गकृत् !
सर्वैस्सेव्यपदाम्बुजातयुगलं निद्राण ! रङ्गे पुरे ।
रुद्धायाः कनकापगाद्भिरभितः श्रीकृष्णपुर्यां मणे !
पत्त्रिप्रेरकचित्रचापधर ! भोस्स्वप्यारसुखं राघव ! ॥

११. कन्निनन्मा

प्राकारावृतकृष्णपूर्निलयमत्काकुत्स्थपादाब्जयोः,
त्वं निद्रां कुरुतादिति प्रगदिताश्शत्क्यायुधेनातुलाः ।
दात्रा श्रीकुलशेखरेण रचिता गाथा दश द्राविडीः
येऽभ्यस्यन्ति दृढं भवन्ति त इमे भक्तोत्तमास्तत्प्रियाः ॥

# श्रीकैरविण्यां पार्थसारथिविषया गाथाः[1]

अनु० अ. मु. श्रीनिवासाचार्यः

१. विर्पेरुविळवुम्

धानुष्कं सुमहान्तमुत्सवमहो कंसं स्वकं मातुलं
मल्लान् मत्तमतङ्गजं गजनियन्तारं निपात्याप्यधः ।
निघ्नन्तं, त्रितयं पुरां ज्वलनसात्कर्तुः शिवस्य व्यथां
गुर्वीं प्रास्य, विभुं, रिपुप्रमथनं तोत्रं वहन्तं करे ॥
पार्थस्यन्दनपूर्वतः स्थितिजुषं, मातुस्सपत्न्या गिरा
त्यक्तस्वीयकिरीटमैक्षिषि परं श्रीकैरविण्यामहम् ॥ १ ॥

२. वेदत्तै—

वेदं वेदफलं रसेन मधुरं, प्राज्ञाश्च ये मौनिनः
तेषां भोग्यमदोषमुत्तमफलं, नन्दस्य दन्तावलम् ।
क्षोणीस्थस्तुतमादिमूलममृतं, दासस्य मे स्वामिनं,
सौधाढ्ये तुलनाविहीनललनानित्यानुभूतिस्थले ॥
मावासे महिलापुरे समगमं श्रीकैरविण्यामहं
[2]भक्तानुग्रहकाम्यया प्रकटितस्वं मूर्तिभिः पञ्चभिः ॥ २ ॥

३. वञ्जनै शेय्य—

कर्तुं वञ्चनमात्तमातृवपुषैवागत्य भीता स्वयं
क्रन्दन्ती भुवि संगता किल पिशाची याभवत्, तत्स्तनम् ।
क्ष्वेलालीढमपासुताकरमहास्वादेन नाथः पिबन्
यो विद्याधरसिद्धचारणगणैः आश्चर्ययुक्तैः स्तुतः ॥

---

1. आल्वारभिधाने श्रीवैष्णवदिव्यसूरिदशके दशमेन कलिध्वंस-(तिरुमङ्गैयाल्वार्) नाम्ना कृतेषु दिव्यप्रबन्धेषु षट्सु अन्यतमे तिरुमोलिनाम्नि दिव्यप्रबन्धे द्वितीयशतके तृतीयं दशकमिदम् । मद्रपुर्यन्तर्गततिरुवल्लिक्केणिनाम्नि क्षेत्रे कृतालयस्य भगवतः पार्थसारथेर्दर्शनसमये गीता एता गाथाः, तदनुवादोऽयम् ॥

2. अस्मिन् श्रीकैरविणीक्षेत्रे पञ्च मूर्तयः सन्ति । तदावेदनार्थमयं पादः, अर्थात् पद्यपूरकश्च । श्रीनृसिंहः, श्रीरङ्गनाथः श्रीवरदराजः, सपरिवारः चक्रवर्तिश्रीतनूजः, सपरिवारः श्रीपार्थसारथिः श्रीवेङ्कटकृष्णस्वामी इति पञ्च मूर्तयः ॥

नारीरूपधरोऽमृतं रुचिकरं योऽदात्कदाचित्पुरा,
तं देवं किल दृष्टवानयमहो श्रीकैरविण्यामहम् ॥ ३ ॥

४. इन्दिरनुक्कु—

इन्द्रार्थं किल गोपवृद्धकलिते प्राचीनरीत्या सवे
मन्त्रैः कल्पितमर्चनं क्रमवशादप्राप्य देवाधिपे ।
वृष्टिं वर्षयति, प्रदूनहृदयैर्गोपैः समभ्यर्थितः
'पाया गोधनमस्मदीयमथ नः पाया अपाया'दिति ॥
धृत्वैकं गिरिमप्रमेयविभवं वृष्टिं न्यरौत्सीच्च यः
तं देवं किल दृष्टवानयमहो श्रीकैरविण्यामहम् ॥ ४ ॥

५. इन्तुणै—

हृद्याम्भोरुहवासिनीप्रियतमं सर्वंसहावल्लभं
स्वस्मिन्न्यस्तभृतेः प्रियं सहचरं नप्पिन्नगोप्याः,* पतिम् ।
अन्येषामपि, पञ्चपाण्डवकृते दुर्योधनादीन्पुनः
दौत्येनाप्य तदीयवाग्विनिमयं कुर्वन्तमाप्तं मम ॥
अस्माकं कुलनाथमैक्षिषि परं श्रीकैरविण्यामहं
भक्तानुग्रहकाम्यया प्रकटितस्त्वं मूर्तिभिः पञ्चभिः ॥ ५ ॥

६. अन्धकन्—

बालेऽस्मिन्ननुषान्धकस्य हि महाराजाधिराजानुजे
राज्ञीमेत्य सुभूषितां 'कुरु पुनर्दास्यं त्वमस्मत्कृते' ।
इत्थं जल्पति, कोपमेत्य 'भगवन् स्वीकुर्वकस्मात्कृपाम्'
इत्येवं ननु कृष्णयाप्यभिहिते, कृच्छ्रं सुकेश्याः, स्त्रियः ॥
भ्रातॄणां शतकस्य चाप्य विधवाश्चापादिता येन, तं
पश्यामि स्म वृषात्मजस्य रथिनं श्रीकैरविण्यामहम् ॥ ६ ॥

---

*द्राविडसाहित्यप्रसिद्धा कृष्णप्रेमपात्रेष्वन्यतमा गोपी 'नप्पिन्नै' नाम्नी ।

श्रीकैरविण्यां पार्थसारथिविषया गाथाः

७. भरतनुम्—

शत्रुघ्नो भरतानुजस्स भरतः सौमित्रिणा मैथिली
रात्रावह्नि च यं स्तुवन्ति, अधिपतिं मे, रावणस्यान्तकम् ।
रक्ताम्लानसुगन्धिशीतललताकुञ्जे समं कोकिलैः
नृत्यं बर्हिषु चाचरत्सु, तरणेरन्तर्गतावज्ञकैः ॥
व्याप्तायां किरणैः समैक्षिषि विभुं श्रीकैरविण्यामहं
*भक्तानुग्रहकाम्यया प्रकटितस्वं मूर्तिभिः पञ्चभिः ॥ ७ ॥

८. पळ्ळियिलोदिय—

विद्याभ्यासगृहादुपागतशिशोर्वक्त्रे सहस्रं पुन-
र्नाम्नां सुष्ठु समाहृतं, श्रवणयोः कर्तुं न चैव क्षमः ।
उक्त्वा तं परुषाक्षरं सुकुपितः स्तम्भं यदाताडयत्,
सद्यश्चन्द्रकलावदातदशनान्, वह्नेश्शिखामुद्गिरत् ॥
नेत्रं वक्त्रमहो बृहच्च कलयन् योऽवातरद्, दृष्टवान्
तं हर्यक्षमतिप्रसन्नवदनं श्रीकैरविण्यामहम् ॥ ८ ॥

९. मीनमर्—

मीनव्याप्तसरस्स्थनव्यसुमनांस्यादातुकामे स्वयं
तत्रागत्य जलेऽवगाह्य करिणि स्वीयं करं चोन्नतम् ।
कृत्वा क्रोशति, नक्रसंग्रहणतः पादे व्यथापीडिते,
कृच्छ्रं तस्य गजस्य संशमयितुं पक्षीन्द्रमारुह्य तम् ॥
कासारं समुपेत्य चक्रमपि संप्रेर्य स्थितं दृष्टवान्
माध्वीस्यद्विनिकुञ्जसौधमहिलाश्रीकैरविण्यामहम् ॥ ९ ॥

१०. मन्नुतण्पोळिल्—

नित्यं शीतलभूरुहावलिसरोवप्रैश्च सौधैर्गृहैः
हर्म्यैर्मण्डपकैश्च दक्षिणदिशाधीशेन संस्थापिते ।
श्रीमत्तोण्डमहीभुजा सुमहिलापुर्यां, मनोहारिणि
श्रीमत्कैरविणीपुरे स्थितममुं संसेव्य नन्दात्मजम् ॥
श्रीमङ्गाजनताधिपेन सुधिया श्रीवैष्णवश्रीजुषा
प्रोक्तं ये दशकं विदन्ति, त इमे विन्दन्ति सौख्यं दिवि ॥ १० ॥

## शरण-गीतानि*

टि. जि. सिद्धप्पाराध्यः

(१)

शाखास्वटन्मर्कटतुल्यमेतन्मनो मदीयं चलतीति सत्यम् ।
संसक्तमेतद्विषयोपभोगे न केवलं तिष्ठति सत्समाजे ॥
तथा प्रवेशं न ददाति मह्यं समाधियोगाय हृदन्तराळे ।
संप्रार्थये त्वां गुरुसङ्गमार्य दयस्व भृत्यं भवदंशभूतम् ॥
मनो मदीयं भवतः पदाब्जे द्विरेफरूपेण निधेहि नित्यम् ॥

(२)

कोऽयं कुतो ह्येष समागतोऽत्र बन्धुश्च को वेति न चिन्तयैवम् ।
अयं मदीयो मम सेवकोऽयं मय्येव संयुज्यत एष भृत्यः ॥
इत्येव सञ्चिन्तय सङ्गमार्य भृत्यं सुतं भावय मां त्वदीयम् ॥

(३)

चन्द्रोदयादुच्चयमेति वार्धिस्तस्यास्तकाले परिहीयते सः ।
मुनिर्यदापः पिबति स्म वार्धेः किमागतोऽब्धेस्सहकर्तुमिन्दुः ॥
यदा तु राहुर्ग्रसते हि चन्द्रं तदा समुद्रः किमु याति मध्ये ।
न कोऽपि देव ! प्रददाति रक्षां त्वमेव दाता जगदेकबन्धुः ॥

(४)

वन्यो रसालः क च कोकिलः क तथापि सञ्जायत एव सङ्गः ।
महीध्रधात्रीलवणोदसारौ संबन्धमेतां किल नैकदेश्यौ ॥
गुहेशलिङ्गस्य ममापि सङ्गः कथं कुतो वेति न शङ्कनीयम् ।

(५)

आशानिबद्धाः शतशो मृताः पुरा तथैव चान्नात्खलु कोटिशो मृताः ।
नितम्बिनीस्वर्णभुवां कृते मृताः सहस्रशस्ते भवरोगपीडिताः ॥
विचार्यमाणे बहुधा गुहेश्वर त्वदर्थमेकोऽपि मृतो न दृश्यते ॥

---

*शरणा नाम लिङ्गायतसंप्रदायिनः साधवः । तेषां यानि भक्ति-विरक्ति-मयानि 'वचनानि' इति प्रसिद्धानि कर्णाटभाषामयानि, तेषु केषांञ्चिदत्रानुवादाः दत्ताः ॥

(६)

ज्ञानप्रभावाद्विनिहन्यतेऽज्ञता ज्योतिर्बलादेव तमो विहन्यते ।
ऋतप्रभावादनृतं विहन्यते तथावलोहश्च मणेः प्रभावात् ॥
भवो मदीयो हत एव देव महानुभावैः शरणैश्च सङ्गात् ॥

(७)

देवः प्रसन्नोऽभवदित्यसत्यं न हि प्रसाद्यस्सहसा हि देवः ।
तेनास्मदीया तनुरेव शोध्यते मनश्च नो नित्यमवेक्ष्यते ननु ॥
तथैव नो वित्तसमाश्रितो मदः परीक्ष्यते तत्परतः प्रलोभनैः ।
अवस्थिते पावन एव जीवने भक्त्या सकम्पः सकृपो हि देवः ॥

(८)

सङ्गं विना नोद्भवतीह वह्निः सङ्गं विना नाङ्कुरयेच्च बीजम् ।
सङ्गं विना नास्ति शरीरभावः सङ्गं विना सर्वसुखस्य नाप्तिः ॥
देव ! त्वदीयैः शरणैश्च नित्यं संयुक्त एवानुभवं तदीयम् ।
ततश्च सौख्यं परमं लभेय सर्वोऽप्ययं मे भवतः प्रसादः ॥

(९)

जले यथा गूढतमोऽस्ति वह्नी रसश्च सस्येषु यथा निबद्धः ।
गन्धश्च पुष्पेषु यथा निरूढस्तथैव जीवेषु परो निगूढः ॥
बालासु सौहार्दमिवास्ति गूढं महेश्वरस्सर्वगतोऽपि गुप्तः ॥

(१०)

मनो निपीड्याथ गृहं विनाश्य त्रिस्रोतसस्त्वंभसि मज्जनेन ।
कं विन्दसे मानव ! पुण्यलेशम् ? गङ्गान्तिके यद्यवतिष्ठते ग्लौः ।
किं त्यज्यते तेन कलङ्क एषः ? ॥
ततश्च योऽन्यस्य मनो न पीडयन् न नाशयत्येव गृहं कदापि ।
स एव धन्यो भुवि पावनश्च तवैष योगः कपिलार्यसिद्ध ॥

(११)

श्रुत्वापि किं स्यात्पठनाच्च किं स्यात्तथैव किं वा गणनाच्च भूयः ।
तथैव संख्यानवशाद्धि किन्तु संप्राप्यते दिक्षु विधावनाच्च ॥
हित्वा पुरस्तादथ पृष्ठतश्चेत्येतादृशं भावमशेषतश्च ।
त्यक्त्वा तु डोलायनमेव चित्त ! समाश्रय त्वं गुरुसङ्गमार्यम् ॥

श्रीतुकारामगाथाः

अनु॰ एस्. एल्. ताम्बे

अभङ्गः १

समचरणमूर्तिरिष्टिकायां भाति । तिष्ठतु हरे, वृत्तिस्तत्र मम ॥ १
अधिकं नेच्छामि मायिकं पदार्थं । देव, तत्रासक्तिर्न मे भूयात् ॥ २
ब्रह्मादिपदानि दुःखस्य कारणम् । तत्रासक्तं चित्तं मास्तु मम ॥ ३
येये कर्मधर्मा नाशवन्तः सन्ति । तुको ब्रूते वर्मं वयं विद्मः ॥ ४

अभङ्गः २

सुन्दरं तद्ध्यानं तिष्ठतीष्टिकायाम् । करौ कटिदेशे स्थापयित्वा ॥ १
तुलसीहारो गले पीताम्बरमङ्गे । रोचते मे सदा ध्यानमेतत् ॥ २
मकरकुण्डले श्रवणे भूषयतः । कण्ठे कौस्तुभमणिर्विराजते ॥ ३
तुको ब्रूते मम सुखमेतत्सर्वम् । द्रक्ष्यामि श्रीमुखं बहुप्रीत्या ॥ ४

अभङ्गः ३

सदा मम दृष्टिर्वसतु तव मूर्तौ । रुक्मिणीदेवीपते प्रियबान्धव ॥ १
मधुरं तव रूपं मधुरं तव नाम । मह्यं देहि प्रेम सर्वकालम् ॥ २
मम विठ्ठलमातर्वरमिमं देहि । प्रविश्य हृदयं नित्यं वस ॥ ३
तुको ब्रूते किंचिन्नाधिकं वरयामि । तव पादे सर्वं सुखमस्ति ॥ ४

अभङ्गः ३६

परेषां योषितो जननीसमानाः । मानयित्वा हानिः कीदृशी स्यात् ॥ १
अकृत्वा परनिन्दां परधनवाञ्छाम् । युष्माकं का हानिर्ब्रूत ब्रूत ॥ २
वदतो 'राम, राम' स्वासने तिष्ठतः । कति श्रमाः सन्ति ख्यात ख्यात ॥ ३
सतां वचनेषु विश्वासो निहितः । युष्माभिर्हीयते किं कथ्यताम् ॥ ४
सत्यभाषणे च कति सन्ति श्रमाः । का वा हानिरस्ति तत्कथ्यताम् ॥ ५
अनेनाचारेण देवप्राप्तिरस्ति । तुको नापेक्षते किंचिदन्यत् ॥ ६

अभङ्गः ३७

विशुद्धेभ्यः सुबीजेभ्यः । निसर्गनियमान्वयात् ॥
फलानि खलु जायन्ते । स्वादूनि सुन्दराणि च ॥ १
सुधामयी मुखे वाणी । देवकार्ये रसः सदा ॥
साधोश्चित्तं तस्य कथम् । सत्यं सर्वाङ्गनिर्मलम् ॥ २
यथा गङ्गा जलं लोके । पवित्रं पावनं तथा ॥
दर्शनेन तुको ब्रूते । तापभङ्गः सुखागमः ॥ ३

अभङ्गः ६३

सुखं सर्षपसमानम् । दुःखं पर्वतप्रमाणम् ॥ १
चित्ते धारय स्मरणं दृढम् । मानय सत्पुरुषवचनम् ॥ २
आयुरर्धं नीतं रात्र्या । शेषं बालत्वजराभ्याम् ॥ ३
तुको ब्रूते, 'मूढ । मायामोहवञ्चितोऽसि' ॥ ४

अभङ्गः ६६

संसारतापेन सन्तप्तोऽस्मि देव । कुटुम्बस्य सेवाकार्ये व्यग्रः ॥ १
तस्मात्संस्मरामि चरणौ त्वदीयौ । एहि मम मातः पाण्डुरङ्ग ॥ २
जन्मजन्मान्तरे भारवाहकोऽस्मि । मुक्तता नास्तीति वर्म जाने ॥ ३
चोरैर्वेष्टितोऽहमान्तरैर्बाह्यैश्च । कुरुते नानुकम्पां कोऽपि मयि ॥ ४
भृशं भ्रंशितोऽस्मि भृशं वञ्चितोऽस्मि । बहुतिथं कालं परिश्रान्तः ॥ ५
तुको ब्रूते, 'धाव वेगेन संप्रति । दीननाथव्रतं सत्यं कुरु' ॥ ६

अभङ्गः ७६

अतः परं युष्मानुपदिशाम्येतत् । व्यर्थं मा क्षिपत स्वीयमायुः ॥ १
सर्वेषां चरणेषु दण्डवत्प्रणामाः । शुद्धं कुरुत चित्तं स्वं स्वं सर्वे ॥ २
देवं चिन्तयत हितकरं भवेत् । भावेन निजमनः शुद्धं कृत्वा ॥ ३
तुको ब्रूते 'कर्म कुरुत हितकरम् । बहुशासनेन वदत कोऽर्थः' ॥ ४

अभङ्गः १२३

सुवर्णस्य पात्रं क्षीरेण सम्भृतम् । भक्षणार्थं दत्तं कुक्कुराय ॥ १
मुक्ताफलहारः खरकण्ठार्पितः । कस्तूरिका लिप्ता सूकराङ्गे ॥ २
वेदपरायणो बधिरमुपदिशति । बधिरः कथं वेत्ति मर्म तस्य ॥ ३
तुको ब्रूते 'ज्ञाता केवलं जानाति । भक्तेर्महिमानं साधुर्वेत्ति' ॥ ४

अभङ्गः १२५

धर्मरक्षणार्थं । महायत्नान्कुर्मः ॥ १
वेदनीतिं वाचा वच्मः । करिष्यामः सद्भिः कृतम् ॥ २
कर्मत्यागी, विना ब्राह्मीम् । स्थितिं नीचः स मानवः ॥ ३
तुकस्तमधमं ब्रूते । 'हरिभक्तेः स दूषकः' ॥ ४

अभङ्गः १२६

यस्योदरे चतुर्दश भुवनानि । स एव सञ्चितोऽस्माभिः कण्ठे ॥ १
अस्माकं सदने किं वस्त्वस्ति न्यूनम् । ऋद्धयः सिद्धयो द्वारि स्थिताः ॥ २
येन पादतले चूर्णिता असुराः । बद्धाञ्जलिरसावस्मदग्रे ॥ ३
न रूपं न रेखा न यस्य चाकारः । अस्माभिः स भक्तैर्दत्ताकारः ॥ ४
अनन्तब्रह्माण्डानि यस्याङ्गे तिष्ठन्ति । पिपीलिकासमः सोऽस्मत्कृते ॥ ५
पादेन प्रहृता ऋद्धयः सिद्धयः । कियती मात्रा तत्र प्राकृतस्य ॥ ६
तुको ब्रूते, 'वयं देवादपि श्रेष्ठाः । संजाता दुराशां दूरीकृत्य' ॥ ७

अभङ्गः १२८

तौ मम बान्धवौ सज्जनौ सुहृदौ । स्मरामि चरणौ विठ्ठलस्य ॥ १
अन्यानहं मन्ये विधिपालनार्थं । भूतानि देवस्य तानि मत्वा ॥ २
सर्वथाहं जातो वैष्णवानां दासः । इच्छामि सेवितुं तदुच्छिष्टम् ॥ ३
तुको ब्रूते यथा हरिदासाः प्रियाः । तथा मह्यमन्ये न रोचन्ते ॥ ४

अभङ्गः १३१

कन्या गच्छति श्वशुरगृहं । परावृत्य पश्यति पश्चात् ॥ १
तादृगवस्था मम जीवस्य । कदा द्रक्ष्यामि केशवम् ॥ २
यदि माता न दृश्यते । बालः सोत्कण्ठः पश्यति ॥ ३
जीवनं विना यथा मत्स्यः । तथैवार्त एष तुकः ॥ ४

अभङ्गः १४१

तृषितस्य कामना । पूरिता न गङ्गा क्षीणा ॥ १
मम मनोरथाः सिद्धिं । यान्तु देव कृपानिधे ॥ २
उदाराणामग्रेसरः । त्वमसि ममाल्पा वासना ॥ ३
कृपादृष्ट्या विलोकय । तुको ब्रूते 'भव सहायः' ॥ ४

# श्रीकबीर - अनुवादः

अनु० चन्द्रशेखर रामचन्द्र ताम्बे

प्रभुस्ते हृदये नित्यमामोदः कुसुमे यथा ।
द्रष्टुं तृणेषु कस्तूरीं मृगस्य भ्रमणं मुधा ॥ १ ॥

दुःखे स्मरति सर्वोऽपि प्रभुं कोऽपि सुखे न तु ।
सुखे चेत्स्मरणं कुर्यात्तर्हि दुःखं कथं भवेत् ॥ २ ॥

तिष्ठतो गुरुगोविन्दौ प्रागहं प्रणमामि कम् ।
गुरो! दर्शितगोविन्दो वन्द्यः पूर्वं भवानिह ॥ ३ ॥

सञ्चरन्ती करे माला भ्रमन्ती रसना मुखे ।
मनस्तु दिक्षु दशसु भ्रमत्येतन्न चिन्तनम् ॥ ४ ॥

ईदृशस्तु भवेच्छिष्यः सर्वस्वं गुरवेऽर्पयेत् ।
ईदृशश्च गुरुः शिष्यादाददीत न किञ्चन ॥ ५ ॥

एतावद् दीयतां स्वामिन्! यावता भ्रियते कुलम् ।
क्षुधितो नाप्यहं वर्ते न च गच्छेत्तथातिथिः ॥ ६ ॥

साधुं जातिं नैव पृच्छेत्प्रष्टव्यं ज्ञानमेव हि ।
मूल्यं खड्गस्य कर्तव्यं खड्गाधानं तु तिष्ठतु ॥ ७ ॥

कबीरो भाषतेऽन्येषां सत्सङ्गो व्याधिनाशकः ।
असत्सङ्गः शुभोच्छेदी लोकेऽष्टप्रहरेष्वपि ॥ ८ ॥

एतादृशो भवेत्साधुः स्वभावो यस्य शूर्पवत् ।
सारं सारं समादाय निपुणः फल्गुवारणे ॥ ९ ॥

रूक्षं शुष्कं भक्षयित्वा पिब शीतं जलं मुदा ।
परस्य घृतसंयुक्तं वीक्ष्य चित्तं न लुभ्यतु ॥ १० ॥

येनान्विष्टं तेन लब्धं गभीरेष्वपि वारिषु ।
वराको मज्जनाद् भीतस्तट एव निषीदति ॥ ११ ॥

---

*प्राचीनहिन्दीवाङ्मये सुप्रसिद्धस्य भक्तवरस्य कबीरनाम्नः महात्मनः कतिपयदोहापद्यानामनुवादः ।

उन्नतेनापि किं तेन यथा खर्जूरपादपः ।
पान्थानां न कृते छाया फलान्यप्यतिदूरतः ॥ १२ ॥

असन्तं द्रष्टुकामोऽहं गतः कमपि नालभे ।
यदान्विष्यामि हृदयं मादृशो न ह्यसज्जनः ॥ १३ ॥

आयान्तं मालिनं दृष्ट्वा कलिकाः क्रोष्टुमुद्यताः ।
पुष्पिताः सञ्चिता अद्य क्रमोऽन्येद्युस्तथा हि नः ॥ १४ ॥

योधास्तिष्ठन्ति परितः सर्वे व्यर्थपरिश्रमाः ।
प्रासादमध्यान्निष्कास्य क्रूरः कालो विनिर्गतः ॥ १५ ॥

चलन्तीं पेषणीं* प्रेक्ष्य कबीरो रोदिति त्वहो ।
उभयोः शिलयोर्मध्ये सकलः कोऽवशिष्यते ॥ १६ ॥

कुमुदिनी सलिले विकसत्यहो, वियति यद्यपि भाति सुधाकरः ।
प्रियकरं किल सिध्यति यस्य यद्, भवति तस्य तदेव समीपगम् ॥ १७ ॥

यत्कार्यं श्वस्तत्किलाद्यैव कार्यं कुर्याः सम्प्रत्यद्य यत्कार्यमस्ति ।
आगच्छेच्चेदप्ययोऽपि क्षणेऽस्मिन्, कार्यं भूयस्त्वं विदध्याः कदा नु ॥१८॥

मृत्तिका वदति कुम्भकारकं, मामकं तु विदधासि मन्थनम् ।
आगमिष्यति स वासरो ध्रुवं, मन्थनं तव मया विधास्यते ॥ १९ ॥

ब्रूते कबीरः कुरु मेह गर्वं, कालेन केशाः करयोर्गृहीताः ।
न ज्ञायते कुत्र हनिष्यतेऽसौ, स्वैरं स्वदेशेऽप्यथवा विदेशे ॥ २० ॥

त्वत्कृते वपति कण्टकं हि यस्तत्कृते कुसुममेव रोपय ।
त्वत्कृते भवति पुष्पमेव तत्, तत्कृते तु भवति त्रिशूलकम् ॥ २१ ॥

यदपि सहजमाप्तं ज्ञायतां दुग्धतुल्यं
भवति सलिलकल्पं याचनेनेह लब्धम् ।
अथ रुधिरसमं तद्विद्धि युद्धादुपात्तं
कथयति हि कबीरश्चिन्तनीयोऽत्र पन्थाः ॥ २२ ॥

*'चक्की' इति भाषायाम् ।

## मधुगाथा*

### वे. राघवः

चैत्राण्यमूनि हि दिनान्यधुनेह जाग्र-
त्युद्‌बोधयन्त्यसमबाणसखं वसन्तम् ।
नानाविधश्रिविकचप्रसवावलीभि-
राबद्धमञ्जुलवतंसविराजमानम् ॥ १ ॥

माकन्दकन्दलरसान्धपिकोऽत्र कूज-
त्युन्मादकाकलिकलापमयं वनान्ते ।
कीराङ्गनाललितचाटुवचश्च तेन
साहित्यवत् सहृदयोन्मदनं समेति ॥ २ ॥

उत्फुल्लसान्द्रमकरन्दभृतप्रसून-
सौरभ्यमाकिरति दिक्षु सरोऽम्बुशीतः ।
मन्दानिलोऽत्र मलयद्रुमगन्धवाहः
कर्णान्तिके मदनमन्त्रजपं व कुर्वन् ॥ ३ ॥

सोऽयं तमालविटपी परिकीर्य शाखा
उल्लोचमुष्णकररोधिनमातनोति ।
प्रच्छायशीतलतलेऽस्य विसारितास्ते
शय्या च शैवलललन्नवरूढघासैः ॥ ४ ॥

कासारतीरभुवि पद्मबिसाशहंस-
कूजार्पितश्रुतिगवोज्झितघासपाल्याम् ।
चिन्तोपगूहनरसेन सुखं शयान
एषोऽत्र दीर्घमनने मन आदधामि ॥ ५ ॥

उत्साह एष जनतासु कियानसारः
उद्रेकिणः कियदधः प्रतिभान्ति फल्गु ।
उत्कर्षिणः कियदमर्षणशालिनश्च
ग्रामश्रियामिह पुरी वितथा विभाति ॥ ६ ॥

---

*आङ्ग्लकवेः 'ग्रे' - नामकस्य 'Ode to the Spring'-नामकं खण्डकाव्यमालम्ब्य रचिता ।

संप्रत्युपर्यतिगतो गगनार्धमार्गं
विश्रम्य किञ्चिदिव तिष्ठति सप्तसप्तिः ।
चिन्तोरुकर्मकरपाणिरपि प्रशान्तः
शेते भृशोच्छ्वसितकारि गवां कदम्बम् ॥ ७ ॥

अङ्गात्र झङ्कृतिरवाश्च समुज्जिहाना
उद्योगिसंकुलहरित्सु तथापि पश्य ।
लोलम्बपुञ्ज इह मञ्जुलकुञ्जमेत्य
गुञ्जत्यसौ मधुनि लम्पटतां निबध्नन् ॥ ८ ॥

केचिच्च चित्रशलभा बहुवर्णचित्र-
पत्रं प्रसार्य परितो विटवद् भ्रमन्ति ।
एवंविधेयमथवा जनतापि सूक्ष्म-
दृष्टेः स्फुरत्यचिरभाग्यतटिद्विलासा ॥ ९ ॥

ये ये कृमिप्रसरणाश्च वयोवयस्याः
भूमौ निलीय विचरन्ति नभश्चरा वा ।
ते ते जना यत उपक्रममारभन्त
नूनं लभन्त उपसंहरणं च तत्र ॥ १० ॥

उद्योगिनः सुखभुजश्च समं तथैव
स्वायुर्दिने तनुनि संविलसन्ति लास्यैः ।
लक्ष्मीविवर्तपरिवर्तवशादनेक-
संभिन्नभिन्नचिरश्रिय आवसानाः ॥ ११ ॥

तीक्ष्णापदा व्यपघृणं परिमर्द्यमाना
आयुःक्षयाच्छिशिरिता जरयापहास्याः ।
मुक्त्वान्ततो गगनलास्यमसारमेतद्
गच्छन्ति भस्मविधया विलयं कुतोऽपि ॥ १२ ॥

एवं विचिन्तयति मय्यधिधर्मचिन्ता
लीलोत्तरोक्तिमिव मन्दमहं शृणोमि ।
निर्भाग्य ! हा मननशोषित ! कस्त्वमेव-
मेकाकितामुपगतो व्यथसे वृथैव ॥ १३ ॥

रामा न कापि समुपैति महे भवन्तं
माध्वी चिता तव न काप्युपभोक्तुमास्ते ।
चित्रं न ते वसनमस्ति, न वा सहाया
अङ्गं च हन्त तव नैव विलासयोग्यम् ॥ १४ ॥

क्षिप्रं पलायितमहो तव यौवनं तद्
अस्तं गतस्तव स भासुररश्मिमाली ।
नूनं गतस्तव गतस्स वसन्तमासः
चैत्रो न एष, वस्मद्य मुदा ललामः ॥ १५ ॥

# सम्मोदवीचिः*

डा० हरिहर त्रिवेदी

१

आलोकवर्त्मनि मम प्रथमं पतन्ती
सम्मोदवीचिरिव सा सुतरामराजत् ।
लावण्यवारिझरपूरमिवोत्किरन्ती
सम्प्रेषिता नयनयोरचिरोत्सवाय ॥ १ ॥

तस्या दृशौ शुचिदिवामुखतारकाभे
कान्तः प्रदोषकपिलः कबरीविलासः ।
अन्यत्तु सर्वमपि तां सृजता विधात्रा
प्रत्यूषसः खलु चितं कुसुमाकराद्वा ॥ २ ॥

मूर्त्तं नु लास्यं किमुताकृतिर्वा मुदो नु सा मोहयतीव लोकम् ।
मुहुर्मुहुर्विस्मयकारिणीव प्रकाममाक्रामति मानसं मे ॥ ३ ॥

२

निर्वर्ण्य सन्निधिगतामथ तां शुभाङ्गीं
सत्त्वं पुनश्च ललनां च तथैव मन्ये ।
सोल्लासमप्रतिहतं गृहिणीचरित्रं
स्वाच्छन्द्यलाघवमनोज्ञगतेरमुष्याः ॥ ४ ॥

पूर्वस्मृतिं सुमधुरामथ संश्रवं च
तुल्यं व्यनक्ति मुदितं मुखमेतदीयम् ।
सृष्टिक्रमे प्रतिदिनस्य च साहचर्ये
सा नैव शोभनतरा न च दिव्यरूपा ॥ ५ ॥

क्षणव्यथां निष्कपटं च भावं स्तवानुरागस्मितचुम्बनानि ।
अश्रूण्युपालम्भमयीं च वृत्तिं व्यनक्ति काले ललनामणिः सा ॥ ६ ॥

---

*विलियम् वेड्स्वोर्त् नामकस्याङ्ग्लकवेः 'She was a Phantom of Delight' इति कविताया रूपान्तरम् ।

ध्यात्वा तु शान्तमनसाथ पुनः पुनस्ताम्
आकारकल्पितसमुन्नतभावशीलाम् ।
बोधप्रदर्शनकरीं सहचारिणीं च
धीरोपपत्तिपृथुसंयमशीलवृत्तिम् ॥ ७ ॥

प्राग्दृष्टिधैर्यपटुताक्षमताभिरामाम्
आदेशबोधपरिसान्त्वनकर्मदक्षाम् ।
निर्माणशिल्पकुशलेन विचार्य धात्रा
सृष्टां जगत्यभिनवां सुषमामनन्याम् ॥ ८ ॥

क्षणे क्षणे भिन्नविकल्पमुग्धो यदा यदा तां ललनाममन्ये
तदैव सा मे प्रतिभासते स्म दिव्यप्रकाशस्फुटसत्त्वरूपा ॥ ९

# स्वर्णपुष्पाणि*

डा० हरिहर त्रिवेदी

क्षितिधरतटभूमौ कन्दराणां च देशे
सलिलधर इवाहं सञ्चरन्नद्वितीयः ।
कनककुसुमपङ्क्तिं वायुलोलप्रनृत्ता-
मुपसरसि तरूणां मूलभूम्यामपश्यम् ॥ १ ॥

पुलिनतटरुहाणां व्योमगङ्गोडुभासा-
मविरतपृथुरेखासीमविस्तारभाजाम् ।
सरसि दशसहस्राण्येकदृक्पात एव
प्रमुदितमृदुलास्याचालिताङ्गान्यपश्यम् ॥ २ ॥

सविधजलतरङ्गोत्कृष्टसौन्दर्यधाम्नां
सहवसतिरमीषां मोदहेतुर्नु सूरेः ।
स्फुरदपरिमिताभां तां पिबन्निर्निमेषः
श्रियमतनुमुदः स्वां बोद्धुमासं न शक्तः ॥ ३ ॥

भूयो भूयो मयि तु शयनं संश्रिते, ध्यानमग्ने
शून्ये वा मे मनसि, नितरां निर्जनत्वात्प्रसन्ने ।
अन्तर्दृष्टौ स्फुरति सुमनःसंहतिः सा नितान्तं
हर्षोत्फुल्लं हृदपि कुसुमैर्नृत्यतोवाशु सार्धम् ॥ ४ ॥

---

*तस्यैवाङ्ग्लकवेः 'Daffodils' इति कवितायाः संस्कृतरूपान्तरम् ।

## अन्धकुमारः* ।

एल्. जे. खरे

आलोकनामविषयो वद कस्स कीदृग्
योऽसौ ममात्र भविता न कदापि भोग्यः ।
सौख्यानि कानि विविधानि ददाति दृष्टि-
र्ब्रूताऽन्धबालकमिमं भवतां वराकम् ॥ १ ॥

दृश्यानि शंसथ चमत्कृतिमन्ति यूयं
सूर्यो विभाति वदथेति च दीप्तियुक्तः ।
सूर्योष्णतामनुभवामि परं, न जाने
भानुः कथं स दिवसं रजनीं च कुर्यात् ॥ २ ॥

रात्रिं स्वयं मम करोमि दिनं च तद्वद्
स्वापे निशा भवति केलिकृतो दिनं मे ।
निद्रां विनाऽविरतजागरणं यदि स्या-
च्छक्यं, तदा दिवस एव सदा भवेन्मे ॥ ३ ॥

नित्यं शृणोमि सहनिश्वसितां शुचं वो
निर्दिश्य मे हतविधिप्रभवामवस्थाम् ।
या सर्वथाप्यविदिता क्षतिरस्ति कापि
सह्या भवेन्ननु मया भजता तितिक्षाम् ॥ ४ ॥

तस्मान्मयेह खलु यन्न कदापि लभ्यं
तच्चिन्तनं न विलिनातु मनःप्रसादम् ।
गायामि यावदिति हन्त भवामि राजा
यद्यप्यहं विगतदृष्टि-वराक-बालः ॥ ५ ॥

---

* Cibber, Colley इत्याख्यस्य आङ्ग्लकवेः 'The Blind Boy' इति ख्यातस्य खण्डकाव्यस्यानुवादोऽयम् ।

## "तस्या वीरपती रणाङ्गणहतो नीतो यदा मन्दिरम् ।"*

एल्. वे. खरे

तस्या वीरपती रणाङ्गणहतो नीतो यदा मन्दिरं
मोहं सा न गता; तथैव च तया शोकेन नाक्रन्दितम् ।
दास्यस्तद्वदनं विकाररहितं निर्वर्णयन्त्योऽवदन्
'अस्मभ्यं प्रतिभाति राव्यमनया नो चेदियं नङ्क्ष्यति' ॥ १ ॥

प्राशंसन् मिलिता जना मृदुपदैर्मन्दं तदा स्वर्गतं
प्रेमार्हं समबोधयन्नवितथं मित्रं तमाहुर्भृशम् ।
शत्रूणां विषयेऽप्युदारहृदयश्चासीदसौ तेऽब्रुवन्
शृण्वत्येव च सा न किंचिदवदत् किंचिन्नवाऽचेष्टत ॥ २ ॥

दासी काचिदनन्तरं च निभृतं त्यक्त्वा स्वकीयासनं
निःशब्दं व्यचरच्छनैरुपगता वीरस्य तस्यान्तिकम् ।
वस्त्रं तद्वदनावगुण्ठनमसौ वक्त्रादपासारयद्
दृष्ट्वा सा मृतभर्तुरास्यमपि नारोदीत् स्थिता निश्चला ॥ ३ ॥

धात्री कापि समुत्थिता तु नवतिर्वर्षाणि यस्या वयः
धृत्वा तस्य शिशुं तदा च जननीजानौ न्यधत्त प्रियम् ।
तत्स्पर्शेन निदाघवृष्टिरिव तन्नेत्राम्बु सद्योऽक्षरत्
सास्रं साऽऽह च मञ्जु वत्स मम भो जीवामि हेतोस्तव ॥ ४ ॥

---

* 'Home they brought her warrior dead' इति 'टेनिसन्'-आख्यस्य कवेः खण्डकाव्यस्यानुवादः ।

## मञ्जरीः प्रति ।*

एल्. जे. खरे

मञ्जर्यः प्रसविष्यतः फलितरोर्वार्ता वहन्त्यः शुभां
यूयं किं पतथ द्रुतं यदपि वोऽतीतो न यानावधिः ।
कंचित्कालमिहैव तिष्ठत रुचं स्वां धारयन्त्यः सुखं
सव्रीडस्मितसुन्दरं, तदनु भो गन्तुं क्षमं वोऽन्ततः ।। १ ।।

किं यूयं विधिनाऽल्पकालसुखदा इत्येव भो निर्मिता-
स्तावच्छर्म वितीर्य कालभवनं गन्तुं किमाज्ञापिताः ।
हा धिक् कष्टमिदं ध्रुवं यदसृजद्युष्मान्निसर्गो मुधा
यः संदर्श्य गुणप्रकर्षमचिरान्नाशाय वः सज्जति ।। २ ।।

ग्रंथस्य स्थ सचेतनान्यवितथं यूयं तु पर्णानि भोः
सत्यं येषु वयं पठेम लिखितं यद् 'वस्तु मात्रं त्विह ।
अत्यन्तं सुभगं समर्थमपि वा युष्मत्समं भङ्गुरं
काले नश्यति लोकसंमुखमहो दर्पं प्रदर्श्यात्मनः' ।। ३ ।।

---

* 'हेरिक्'-आख्यस्याङ्ग्लकवेः "To Blossoms" इति ख्यातस्य खण्डकाव्यस्यानुवादः ।

# निकषोपलः

## १. वेदलावण्यम् (भागद्वयात्मकम्)

प्रणेता डा० सुधीर कुमार गुप्तः। एम्. ए. पी. एच्.डी. बी. ए. ऑनर्स्, शास्त्री, प्रभाकर, आचार्यः, संस्कृतविभागः, गोरखपुर विश्वविद्यालयः, गोरखपुरम्। प्रकाशनस्थानम्ः भारती मन्दिर, ४ हीरापुरी, गोरखपुर। मूल्यम् प्र. भागः रू. ८-२५. द्वि. भागः २-५०.

एतद्ग्रन्थप्रणेत्रा विरचिताः, पूर्वनिर्दिष्टप्रकाशनस्थानेन प्राकाश्यं नीताः हिन्दीभाषानुवादरूपाः, संस्कृतव्याख्यानरूपाश्च अन्येऽपि केचिद् ग्रन्थाः निदर्शनार्थमागताः। तेऽपि क्रमशोऽत्र विमृश्यन्ते।

'वेदलावण्यनामकस्य ग्रन्थस्यास्य प्रथमभागतया परिगणनीयेऽस्मिन् पुस्तके, पारस्करगृह्यसूत्रनामकस्य कर्मकाण्डप्रक्रियाबोधकस्य सूत्रग्रन्थस्यैकदेश-भूतानि उपनयनसंस्कारप्रतिपादकानि सूत्राणि व्याख्यातानि। तत्सन्दर्भे आश्वलायन-आपस्तम्ब-गोभिलगृह्यसूत्रैर्विहितानां प्रक्रियाणां पारस्करगृह्यसूत्र-विहितानां च पारस्परिको विभेदः सुस्पष्टं विमृष्टः।

ऋग्वेदीयानि विष्णुसूक्त-पुरुषसूक्तानि संहितापाठपदपाठैः सहितानि सायणभाष्य-हिन्दीभाषानुवादाभ्यां साकमेतद्ग्रन्थस्योत्तरं भागमलङ्कुर्वन्ति। तत्र तत्र विवृतिमपेक्षमाणानां पदानां टिप्पणं च दत्तमास्ते। वेदप्रामाण्यविषये प्राचीनपरिपाटीस्थाने नवीनयुक्तिसङ्गतविवरणोपस्थापकत्वेनास्य ग्रन्थस्य वेद-लावण्याख्यां सङ्गमयत्ययं ग्रन्थकारः। वैदिकस्वरवैदिकव्याकरणविवरणपरौ च द्वावध्यायौ वर्तेतेऽत्र ग्रन्थान्ते। हिन्दीभाषाविदां वैदिकश्रद्धावतां चायं ग्रन्थो मोदमापादयेदित्ययमस्मदाशयः॥

## २. वेदलावण्यम् (द्वितीयो भागः)

अत्र हिरण्यगर्भप्रजापतिसूक्तस्य वाक्सूक्तस्य संहितापाठः पदपाठश्च सस्वरं प्रकाशितौ। यथापूर्वं सायणभाष्यं, हिन्दी-अनुवादः, टिप्पणी चेत्येते अंशाः परिदृश्यन्ते। अन्ते वेदलावण्य-ऋक्सूत्राणां, टिप्पणीषु व्याख्यातानां च वर्णानुक्रमणिका संयोजिता॥

३. गायत्रीमन्त्राक्षराणामृषिच्छन्दआदयः

चतुर्विंशत्यक्षरात्मिकायां गायत्र्याम् एकैकस्य मन्त्राक्षरस्य ऋषिः, छन्दः, देवता, तत्त्वं, शक्तिः, वर्णः, मुद्रा, न्यासः, विनियोगः इत्येते अंशाः ब्राह्मण-निरुक्तादीन्यनुसृत्य ग्रन्थेऽस्मिन् संस्कृते हिन्दीभाषायां च निरूपिताः ।

अपूर्णोऽयं ग्रन्थः ८८ तमे पृष्ठे विश्राम्यति । मूल्यमज्ञातम् । परिशिष्टभागे दत्तानि अग्न्यादिदेवतानां वेदसम्मतानि शताधिकानि नामान्तराणि परितोषमुपजनयन्ति ; निरूपयन्ति च ग्रन्थप्रणेतुः परिश्रमं, विमर्शनचातुरीं च ।

४. वेदभाष्यकारों का आलोचनात्मक अध्ययन

ग्रन्थेऽस्मिन् वेदभाष्यकाराणां, तथा वेदसंहितामन्त्रयोर्व्याख्यातॄणां च विचारधारा-विवेचनपाटवशैल्यादिविषये विमर्शनात्मकमवलोकनं कृतम् । माधवभट्टः, स्कन्दस्वामी, उद्गीथः, वेङ्कटमाधवः, माधवभरतस्वामिनौ, उवटमहीधरौ, सायणः, वररुचिः, भट्टभास्करः, चतुर्वेदस्वामी, गुणविष्णुः, हरदत्तः, मुद्गलः, आनन्दबोधः, देवपालः, कालनाथः, रावणः, द्याद्विवेदः, शौनकः, भट्टोजीदीक्षितः, आत्मानन्दः, मध्वः, दैवज्ञपण्डितसूर्यः इत्येवं त्रयोविंशाः प्राचीना वेदभाष्यकारा अत्र विमर्शनविषयीकृताः । अन्ते आधुनिकसाम्प्रदायिक-भाष्यकृतां च शैल्यादिविषये विमर्शः कृतः । अत्र माक्स्मूलराख्यस्य तथान्येषां आधुनिकव्याख्यातॄणां वेदविचारधारापि विमर्शविषयीकृता । १०४ तमेन पुटेनायमप्यसम्पूर्णो ग्रन्थ इत्याभाति । वैदिकविमर्शकानां कृतेऽयमत्यन्तोपयोगी ग्रन्थः । अज्ञातमूल्यः ।

५. ऋग्वेद के ऋषि और उनका दर्शन और सन्देश मूल्यं रू. ३-५०

केरलविश्वविद्यालयसम्बन्धि केरलवर्मा वलिय-कोयिल्तम्बिरान्-स्वर्णपदकेन सम्भावितोऽयं लेखः । वेदार्थपरिज्ञानाय ऋषिच्छन्दोदेवता-नामवगमस्यापरिहार्यतां स्पष्टयत्यस्मिन् ग्रन्थेऽयं विमर्शकः । अपि च वेदार्थ-परिज्ञानविषये ऋषिच्छन्दआदीनामनुपयुक्ततां भावयतो दयानन्दसरस्वती-महाशयस्याऽऽशयं सयुक्तिकं खण्डयत्ययं ग्रन्थकारः । आंग्लानुवादेन हिन्दी-मूलेन च साकं सन्दृब्धोऽयं ग्रन्थः सर्वत्र समादरमुपलभेतेत्याशास्महे ॥

६. सूर्यदैवज्ञपण्डितविरचितं वेदमन्त्रादीनां भाष्यम्

विंशतिपुटात्मकोऽयं लघुग्रन्थः "अग्निमीड" इत्यादीनां कतिपयानामृङ्मन्त्राणां भाष्यमुद्वहति । तत्तादृङ्मन्त्रोपबृंहणत्वेनोद्धृताः श्रीभगवद्गीताश्लोकाः भाष्यस्यास्य पुष्टिमुपजनयन्ति । उपोद्घाताद्यङ्गराहित्यादस्य सम्पूर्णता सन्देहविषयीक्रियते ॥

७. रावणभाष्यम्

केवलं द्वात्रिंशत्पुटात्मकेऽस्मिन् लघुग्रन्थे "तद्विष्णोः परमं पदं," "द्वा सुपर्णा" इत्यादीनां त्रयोदशसंख्याकानां ऋङ्मन्त्राणां रावणकृतं भाष्यं प्रकाशितमस्ति । एतद्ग्रन्थस्य प्रथमपरिशिष्टे मन्त्राणां पदच्छेदः, द्वितीये च भाष्यसम्बन्धि-हिन्दीभाषानुवादश्च वर्तते । लघुरप्ययं ग्रन्थो नाम्ना, विषयविन्यासेन च हृदयमावर्जयति । मूल्यमज्ञातम् ॥ —की. श्री.

सुगलार्थमाला

ब्रह्मश्रीनारायणद्विजवर्यैः प्रणीता । तदन्तेवासिना श्रीदामोदरपिषारकेण विरचितया दीपिकयोज्ज्वलिता । मूल्यं सार्धं रूप्यकद्वयम् । प्राप्तिस्थानम्: Sri P. Narayana Nampootiri, Srinadam, Mukkalivattam, Tripunithura, Kerala.

संस्कृतभाषायां व्याकरणपरिनिष्ठितपदप्रयोगोदाहरणत्वेन प्रणीताः भट्टिकाव्यं, धातुकाव्यं, वासुदेवविजयम्, इत्यादिका ग्रन्था वर्तन्त एव । अथाप्यस्यां भाषायां परस्परव्यवहारकाले एकस्मिन्नेव वाक्ये कालत्रयसंबद्धतयैव प्रयोगश्शुद्ध एव क्रियते । अनुभवसिद्धश्चायम् । परन्तु ईदृशलकारप्रयोगे किं नियामकं कीदृशी शास्त्रप्रवृत्तिः इत्यादिकं सविमर्शमनूद्य उदाहरणरूपतया छन्दोनिबद्धोऽयं ग्रन्थः इदम्प्रथमतयाऽवतीर्णः, ईदृशप्रयोगकुतूहलिनामवश्यमादरणीयः । किञ्च विषयस्यास्य दुरूहत्वात् तदर्थमनायासेनावगन्तुमस्य व्याख्या च यथायथं विलिख्य मुद्रिता प्रकाशिता च । चतुरश्रं मुद्रणम् । ग्रन्थः क्लिष्ट इति नामैवावगमयति-सुगलार्थमाला-इति । एतदर्थवर्णनं च इदंग्रन्थद्वितीयखण्डद्वितीयश्लोकेन कृतमस्ति । षट् खण्डा अत्र विद्यन्ते, आहत्य च १२० श्लोकाः । नवीनोऽयं ग्रन्थः शब्दाभिमानिभिरत्येवादरणीयः ॥

—अ मु. श्री.

## विमर्शामृतम्

श्रीपूर्णानन्दभारतीस्वामिविरचितम् । रा. श्रीनिवासशास्त्री, राममन्दिर-वीथी, सत्यनारायणपुरम्, विजयवाडा—३. मूल्यं रू. ५.

सनातनधर्मप्रचारबद्धादरैः साम्प्रदायिकैः यतिवर्यैः विरचितोऽयं ग्रन्थः । अत्र तिथितत्त्वं, चन्द्रसूर्ययोः मिलितयोः ऋतुहेतुत्वं, भूभ्रमणवादस्य दृग्गणितस्य च प्रामाणिकत्वं, मनसो विभुत्वं, श्रीविद्यारहस्यम्, आयुर्वेदस्य भारतीयानामावश्यकता, सगोत्रताविवाहस्य असवर्णविवाहस्य च दुष्टफलत्वम्, अद्वैतदृष्टेः लौकिकदृष्ट्यविरोधः, श्रीकृष्णस्य जारचोरत्वादिनिराकरणम् इत्यादयो विषयाः विमृश्य निर्धारिताः । आस्तिकैः अवश्यमुपादेयोऽयं ग्रन्थः ॥

—श्री सु. शास्त्री

## श्रीमन्मरुच्छास्त्रसारसङ्ग्रहः, सद्भक्तिदर्पणं च

ग्रन्थद्वयमिदं शास्त्ररत्नं ची. रघुनाथाचार्यविरचितम् । प्राप्तिस्थानम् : २९, हयवदनसदनम्, ६ ने. वीथी, चामराजपेट, बेङ्गलूर्—१८. मूल्यं ०. ५०; १. ७५.

तत्र मरुच्छास्त्रसारसङ्ग्रहः "मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा" इति श्रीमध्ववचनव्याख्यामिषेण अद्वैतखण्डनपरः । खण्डनयुक्तयस्तु प्रायः प्राचीनैरुद्भाविता एव श्रीमधुसूदनसरस्वत्यादिभिः निरस्ताश्च । सद्भक्तिदर्पणं तु श्रीमध्वाचार्याभिमतमोक्षसाधनानि तद्ग्रन्थानुसारेण प्रतिपादयति । भक्तिज्ञानवैराग्याणां मोक्षसाधनानां कस्य प्राधान्यं कस्य वा गुणत्वमित्यपि विवेचयति । ग्रन्थद्वयमपि अशुद्धिबहुलत्वात् दीर्घतरां शुद्धिपत्रिकामपेक्षते ॥

—श्री. सु. शास्त्री

## परतत्त्वदिग्दर्शनपरीक्षा

श्रीकाञ्ची-प्रतिवादिभयङ्करश्रीमदण्णङ्गराचार्याणां कृतिः । मूल्यम् ५० पैसा । प्राप्तिस्थानम् : ग्रन्थमाला आफीस्, काञ्चीपुरम् ।

अस्यां कृतौ देहलीपुरवास्तव्यमाधवाचार्यशास्त्रिलिखितस्य परतत्त्व-दिग्दर्शनाख्यग्रन्थस्य स्थालीपुलाकन्यायेन कञ्चिदंशमनूद्य सर्वात्मनेदमसङ्गतमिति बहुमुखमुपन्यस्तम् ॥

—अ. मु. श्री.

संस्कृतस्तोत्रग्रन्थाः

आङ्ग्लान्ध्रानुवादसहिताः । प्राप्तिस्थानम् : श्री· पि· कृष्णमूर्तिः, ५६७७, सेइन्ट् मेरी रोड्, सिकन्दराबाद्, आ· प्र·

| | | | रू. पै. |
|---|---|---|---|
| १ | भजगोविन्दम् | १९५९ | ०. ५० |
| २ | शिवानन्दलहरी | १९६१ | ०. ७५ |
| ३ | दक्षिणामूर्तिस्तोत्रम् | १९६२ | ०. २५ |
| ४ | कनकधारास्तवः | १९६२ | ०. २५ |
| ५ | लक्ष्मीनृसिंहस्तोत्रम् | १९६३ | ०. २५ |
| ६ | मुकुन्दमाला | १९६३ | ०. ५० |
| ७ | आदित्यहृदयम् | १९६३ | ०. ५० |
| ८ | जीवन्मुक्तानन्दलहरी | १९६४ | ०. ३७ |
| ९ | प्रश्नोत्तररत्नमालिका | १९६४ | १. १० |
| १० | श्रीवेङ्कटेशसुप्रभातम् | १९६४ | १. ०० |
| ११ | भर्तृहरिनीतिशतकम् | १९६५ | १. ०० |
| १२ | प्रश्नोत्तरमणिरत्नमाला | १९६५ | ०. ५० |
| १३ | अन्नपूर्णाविश्वनाथाष्टके | १९६५ | ०. २५ |

सर्वाण्येतानि सुप्रसिद्धस्तोत्राणि, आन्ध्रलिप्यां सरलेन स्वीयाङ्ग्लानुवादेन, कानिचित् आन्ध्रानुवादेन सह उन्मुद्र्य श्रीमता विदुषा पि· कृष्णमूर्तिना प्रकाशितानि। तेषु ६, ७, १०, १२, संख्याङ्कितानि मुक्त्वा, शिष्टानि श्रीमज्जगद्गुरुशङ्करभगवत्पादैः विरचितानि । आन्ध्रलिपिज्ञानां, आङ्ग्लविद्यावासनावासितानां, विशेषतः तत्तत्स्तोत्रार्थबुभुत्सूनां नित्यं पारायणं कुर्वतां कृते सुतरामुपकारायैव अनुवादकस्य कृषिरेषा भविष्यति। तत्र प्रतिस्तोत्रं प्रेक्षावद्भिः प्रसिद्धिमद्भिः विद्वद्भिरुपरचितोपोद्घातवचनैः भूषितम्। श्रीमतः कृष्णमूर्तेरनुवादः सुलभः अर्थवांश्च दृश्यते । वदान्यसुहृत्साहाय्येन श्रीमान् प्रकाशयिता अनल्पमूल्यानि स्तोत्ररत्नानि अल्पमूल्येन सङ्ग्रहणयोग्यानि चकारेति परं प्रमोदस्थानम् ॥

—रा· कृ· शास्त्री

संस्कृताध्यापनम् (The Teaching of Sanskrit)

प्राध्यापक-श्री· के· रामवर्मराजेन लिखितम् । मद्रपुरी-संस्कृतविद्यासमित्या (१४, प्राच्यमाडवीथी, मैलापूर्, मद्रास्-४) प्रकाशितम् · रू· ५·

नातिचिराद् मद्रपुर्यां श्रीकाञ्चीकामकोटिपीठाधीश्वराणां श्रीमच्छङ्कराचार्याणामनुग्रहेण प्रचालिता संस्कृतविद्यासमितिः शास्त्रशिक्षा, ग्रन्थप्रकाश-

नमित्यादिकं विविधं संस्कृतकार्यं तन्वाना दक्षिणदिशि संस्कृतरक्षायै उद्युञ्जाना वर्तते। अद्यतने लोके, पाठशालासु पाठ्यविषयेषु बहुलीभूतेषु, विरलीभूते च संस्कृतवातावरणे, सुबन्ततिङन्तनियमैः कष्टेयं भाषेति वृथापवादे च रूढप्राये सञ्जाते, संप्रदायसिद्धा शिक्षाप्रणाली एकैव सर्वत्रापि नोपयोक्तुं शक्या; तत्र तत्र सन्निवेशानुसारं सा शिक्षापद्धतिः समुचित-विपरिणामेन प्रयोज्या; भाषाध्ययने च ये ये नूतना उपाया आधुनिकैरुट्टङ्किताः तेऽपि यथोपयोगं स्वीकार्याः। सर्वथा यथा संस्कृताध्ययनं न कठिनं स्यात्, यथा च तत्र रुचिरेधेत तथा यद्यत्कर्तुं शक्यते, तत्सर्वं संस्कृतप्रचारोत्सुकैः कार्यमेव।

एतत्सर्वमालोच्यैव ग्रन्थोऽयं संपादितो ग्रन्थकृता, प्रकाशितश्च संस्कृत-विद्यासमित्या। ग्रन्थकृच्चायं संप्रदायरीत्या आधुनिकमार्गेण च पठित्वा संस्कृतं, तदध्यापने कृतश्रमः लब्धानुभवः, आधुनिकशिक्षाप्रक्रियोत्तीर्णश्च। १४-अध्यायेषु अत्र विचारिता विषयाः—संस्कृतमुख्यत्वम्; संस्कृताध्यापनम्; प्राचीननवीनमार्गौ; पाठ्यविषयाः; पठनकालक्रमादिकम्; पाठपर्यवेक्षणम्; संस्कृताक्षराणां स्वरूपमुच्चारणं च; पठनम्; शब्दराशिसमार्जनम्; विषयोपन्यासः; सन्दर्भविरचनम्; माणवकलेखानां शोधनम्; अनुवादः; हस्तलेखः; शब्दानामक्षरशो ज्ञानम्; साहित्यम्; तद्विभागाः; गद्यपद्यादीना-मध्यापनम्; तत्पाठे रसोत्पादनम्; व्याकरणम्; तदध्यापनस्य समुचितं स्थानम्; पाठ्यपुस्तकानि, पुस्तकालयश्च; परीक्षाः, लिखितपरीक्षाः, मौखिकपरीक्षाश्च; अध्यापकगुणाः।

ग्रन्थस्य कर्ता प्रकाशयितारश्च धन्यवादार्हाः॥ —वे. रा.

## गीतजवाहरम्

रामकिशोरमिश्रेण कृतम्। ग्रामोदयप्रकाशनमन्दिरम्, आर्यनगरम्, पो. मोरपुरखास्, जि० अलीगढ्, उ. प्र. रू. १-५०.

## शान्तिदूतस्मरणिका

प्रबोधकुमारकृता। शरपड़ा-शारदासदनम्, पो० अ० खण्डसाही, जि० कटक्. ६० न. पै.

कीर्तिशेषाणां स्वतन्त्रभारतप्रथममन्त्रिसभानेतॄणां तिरोभावेन भारतस्य यः शोकः, लोकस्य यः क्षेमभङ्गः, शान्तेश्च यः प्रत्यादेशः सर्वमिदं

सार्वत्रिकं, दौर्भाग्यं दुःखमये खण्डकाव्यद्वयेऽत्र प्रतिपादितम्। नेतृमुख्यस्यास्य गुणान्तराणि, मेधा, लेखशक्तिः, शिशुप्रियता इत्यादिकान्यपि वर्णितानि ॥

—वे. रा.

## भारतवैजयन्ती, यात्रा च

ए. वि. कृष्णवारियर्-अभिधेन कृते। गीता प्रेस्, तिरिशूर्, केरलम्।

प्रथमे प्रबन्धे ३४-पद्येषु भारतराष्ट्रीयध्वजपटः विविधमुल्लिख्य वर्णितः। विशिष्य तस्य अहिंसादिधर्मसन्देशव्यञ्जकता श्लोकेषु प्रतिपादिता। द्वितीये प्रबन्धे कविना हिमवत्पादपर्यन्तं तत्तत्प्रदेशदिदृक्षया या यात्रा कृता, तत्र दृष्टाः विविधा विषया वर्णिताः। स्वतन्त्रभारतेन उपक्रान्ता वारिसेतुबन्धादिका उद्यमाः, चण्डीगर्-देहलीप्रभृतयो राजधान्यः अमृतसरःस्थ-सिख-मतीयानां सौवर्णमन्दिरमित्यादयो वर्णिताः। तत्र तत्र दृष्टानां तत्तत्स्थलविशेषाणां फोटोचित्राणि च योजितानि ॥

—वे. रा.

## केनोपनिषद्

डा० सीतानाथगोस्वामिना सविवरणं संपादिता। संस्कृतपुस्तकभण्डार्, ३८, कार्ण्वालिस् स्ट्रीट्, कलकत्ता-६. रू. ५-५०.

यादवपुरविश्वविद्यालये संस्कृताध्यापकेन प्राचीनाधुनिकोभयरीत्या संस्कृतमधीतवता ग्रन्थकृतात्र केनोपनिषद् आङ्गल-संस्कृतविवरणसहिता टिप्पणीसमृद्धा प्रदत्ता। छात्राणामन्येषां च बहूपयुक्ता स्यात्। शङ्करभाष्यमद्वैतप्रक्रिया च व्याख्यानेऽनुसृता। अन्ते वङ्गानुवादोऽपि योजितः।

—वे. रा.

## महालक्ष्मीस्तुतिमाला

प्राप्तिस्थानम्: सि. मुत्तुकुमारस्वामि मुदलियार्, चेय्यूर्, मधुरान्तकम् तालूका, मद्रास्।

अस्मिन् भक्तिभावप्रेरिते सङ्कलने इमा महालक्ष्मीविषयिकाः स्तुतयः प्रकाशिताः—महालक्ष्मीनामचतुर्विंशत्युत्तरत्रिशती, तस्याः त्रिशतीनामस्तोत्रम्, मन्त्रनामावली-पूजाक्रमसहिता, देव्या द्वादशनामस्तोत्रं च। सर्वमिदं देवनागरीलिप्यां द्रमिडलिप्यां च मुद्रितं भक्तेभ्यो महत उपकाराय भवेत्।

—वे. रा.

### श्रीसुन्दरविनायकनित्योत्सवपद्धतिः, देवतापञ्चकस्तुतिश्च

महाकविश्रीसुन्दरेशशर्मप्रणीते । प्रणेता, पश्चिमप्रधानवीथी, तञ्जावूर्, मद्रास् ।

भाणनाटकादिकर्ता श्रीसुन्दरेशशर्मा चिरादुपासनामार्गप्रविष्टः विशिष्य गणेशसाधनासक्तः । रचिताश्च कतिचित्तेन गणपतिसपर्याविषयका ग्रन्थाः । अस्मिन् पुस्तके विनायकसुप्रभातस्तोत्रम्, तन्मन्त्रमालास्तुतिः, तद्विषयकाणि गीतानि च प्रकाशितानि । द्वितीये भागे, कविनानेन रचिताः बालापरमेश्वरी-भुवनेश्वरी-त्रिपुरसुन्दरी-महिषासुरमर्दनी-मातङ्गीतिदेवीमूर्तीनां स्तुतयो दत्ताः । अन्ते च तन्त्रप्रशंसापराः श्लोकाश्च । —वे. रा.

### श्रीशास्तुः सुप्रभातम्, श्रीहरिहरपुत्राक्षरमाला

रचयिता—श्रीस्वामिशास्त्री, ३१३, टङ्कशालावीथी, मद्रास्-१ । न. पै. २५.

गाणपतादिमन्त्राध्वनिष्णाता एते दीक्षया अनन्तानन्दनाथाभिधानाः श्रीस्वामिशास्त्रिणः स्तोत्रद्वयमत्र शास्तृविषयकं भक्तानां पुरत उपहृतवन्तः । यद्यपि हरिहरपुत्रः पुराणेषु श्रुतः, तथापि तस्यालयाः, उपासना च दक्षिण-भारते, विशिष्य केरल एवाद्य दृश्यन्ते । पुस्तकाचास्मात् शास्तृभक्तिमार्गस्य परिचयो भविता भारते प्रान्तान्तरवासिनां पण्डितानाम् । —वे. रा.

### उदाहरणानि

कर्ता-श्रीभाष्यं विजयसारथिः, श्रीविश्वेश्वरसंस्कृतान्ध्रकलाशाला, वरंगल्, आन्ध्रप्रदेशः । रू. १.

प्रणेत्रानेन उपत्रिंशत् संस्कृतकृतयो गद्यपद्यरूपकात्मिका विरचिताः । तत्र बह्व्यः स्तुतयः । प्रकृता कृतिश्च तादृश्येव, किन्तु तत्रास्ति कश्चन विशेषः । अर्वाचीनालङ्कारग्रन्थान् विशिष्य आन्ध्रदेशे विरचितान् प्रतापरुद्रीयादीनालोकितवतां परिचितमिदं स्यात् यद्बहवः क्षुद्रप्रबन्धविशेषाः राज्ञां देवतानां च प्रशस्तिरूपाः तत्र वर्णिता इति । तेष्वन्यतमोऽयमुदाहरणाख्यः, यत्र सप्तविभक्तिषु यतिप्रासालङ्कृताः पृथग्भागाः देश्यच्छन्दोबद्धाः मनाक् मालिनी-शार्दूलविक्रीडितादिप्रसिद्धसंस्कृतछन्दोनिवेशाश्च गुम्फिताः । यथा लक्षणं, तथा लक्ष्यं च भूयसा आन्ध्रदेशकविष्वेव दृष्टं, तैरेव चोदाहरणादीनि आन्ध्र्यां संस्कृते च रचितानि ।

प्रस्तुते पुस्तके कविना विजयसारथिना त्रीणि उदाहरणानि संस्कृते विरच्य समर्पितानि, येषां स्तुतिविषयाः श्रीवेङ्कटेश्वरः, श्रीरामचन्द्रः, श्रीरामानुजाचार्यश्च। आन्ध्राद् बहिर्ये संस्कृतज्ञाः कवयश्च तेषामेतत्पुस्तकद्वारा प्रादेशिकस्य खण्डकाव्यविशेषस्यास्य शैल्यादिकं सुज्ञं भविष्यतीति सर्वथाभिनन्द्योद्यमोऽयं कविः। —वे. रा.

## सारस्वतशतकम् (चित्रकाव्यम्) सटीकं सभूमिकं च

रचयिता-श्रीश्रीजीवन्यायतीर्थः, संस्कृतकलाशालाध्यक्षः, भट्टपल्ली। प्रकाशस्थानम् : कल्कत्ता विश्वविद्यालयः। रू. २०.

संस्कृतप्रतिभावाचकानां काव्यस्यास्य कर्ता सुतरां परिचित एव। अनेन कृतानि बहूनि प्रहसनादीनि लघुरूपकाणि प्रतिभायां प्रकाशितानि। आधुनिकसंस्कृतकविषु मुख्यं स्थानं वहत्येषः। प्राचीनभाषाशैल्या आधुनिकवस्तुयोजनेन शुद्धया सरलया च भाषया शोभतेतमामस्य कविता। यद्यपि रूपक एव प्रायोऽनेन परिश्रान्तं तथापि मार्गान्तरेष्वपि पाटवमस्य विद्यते, यद्यपि प्रायः सरलसुन्दररीत्यैवैष लिखति, तथापि कठिने चित्रमार्गेऽप्ययमश्रान्तमतिरिति प्रकटयति व्यवसाय एषोऽस्य प्रत्यग्रः सारस्वतशतकं नाम। अत्र सरस्वतीस्तोत्ररूपेण अष्टोत्तरशतं विविधैर्वृत्तैः श्लोका निबद्धाः। अर्थतः सरला एवैते, किन्तु एकैकः श्लोकोऽत्र चित्रबन्धे कस्मिंश्चिन्निबद्धः। भारविमारभ्य चित्रबन्धकविता परिचितैव। बहुष्वलङ्कारग्रन्थेषु चास्या बहवो भेदा वर्णिताः। प्रसिद्धानप्रसिद्धांश्च भेदानादाय रचितेऽस्मिन् शतके श्रीजीवन्यायतीर्थैः महता कौशलेन परिश्रमेण च अपूर्वा अनेके बन्धाः प्रदर्शिताः। ६६-बन्धाः चित्रैः व्याख्यया च विशदीकृताः कौतुकमावहन्ति। आमुखे चित्रकवितायाः संस्कृतसाहित्ये क्रमिकं विकासमधिकृत्य आङ्ग्ल-वङ्ग-वाणीभ्यामुपन्यासोऽपि ग्रन्थकृतैव दत्तः। —वे. रा.

## कवितोदयचन्द्रिका

कर्ता डा० गिडुगु वे. सीतापतिः। विशाला पब्लिकेषन्स्, हैदराबाद्-४, आ. प्र.। रू. २.

कर्तासौ तेलुगुसाहित्यगोष्ठीषु प्रसिद्धः। तस्य संस्कृतभाषायां पाटवं नूतनरचनाकौतुकिता च श्लाघनीये। इदंप्रथमतया तस्य संस्कृते कस्यापि

प्रसिद्धस्य आधुनिकस्य आन्ध्रकवेः किमपि साहित्यं "स्वर्णपुत्तली पूर्णाम्बा" इति ख्यातम् अनूद्य अस्यां प्रतिभायामेव पूर्वं प्रकाशितम् । एवमेव बहु तेलुगुसाहित्यात् तेन तदा तदा संस्कृते अनूदितम्, स्वतन्त्रतया च संस्कृत एव कानिचन लघूनि विरचनानि च कृतानि । तदेतत्सर्वमत्र सङ्कलय्य मुद्रितं रसिकानां प्रमोदाय भवति । विशिष्यान्तिमे भागेऽत्र यानि क्षेत्रज्ञनाम्नां तेलुगुवाग्गेयकाराणां प्रसिद्धानि तेलुगुपदानि शृङ्गारनायिकानायकभेद-निदर्शनरूपाणि, तेषां संस्कृतानुवादाः प्रशंसामर्हन्ति । —वे. रा.

## कृष्णाभ्युदयं नाम प्रेक्षणकम्

श्रीलोकनाथभट्टप्रणीतम् । श्रीनरेन्द्रशर्मणा संपादितम् । प्रकाशकः— प्रो. जगदीशलाल शास्त्री, प्रेमनगरं, जबलपुर्, म. प्र । रू. ३.

इदमेकाङ्कं प्रेक्षणकं द्रमिडदेशे काञ्चीनगर्यां कविशेखरश्रीवरदार्य-तनूभवेन श्रीलोकनाथभट्टेन विरचितम् । भगवतः श्रीकृष्णस्य जन्म विषयीकरोति । अत्र नूतनतया कविना योजितोंऽशः विश्ववेदिन्याख्या हस्तरेखावाचिका भाग्यलक्षणवेदिनी, या गर्भालसां देवकीं कंसहिंसाभीरुमाश्वासयति भाविमङ्गल-कथनेन । प्रेक्षणकलक्षणं तु अत्र यथाकथञ्चिद्योजनीयम्; अथवा प्रेक्षणीयं नाम भेदान्तरविलक्षणत्वे सति प्रेक्ष्यसामान्यलक्षणवत्त्वं यस्येति समर्थनीयम् । संपादयित्रा हिन्दी-अनुवादः, भूमिका, प्राकृतशब्दकोशश्च योजिताः । मातृकायां तत्र तत्र पंक्तिलोपा वर्तन्ते । २१-पृष्ठे 'प्रेक्षामः' इति छाया दत्ता; 'प्रेक्षामहे' इत्यत्र भाव्यम् । —वे. रा.

## श्रीरामराज्यं जननायकम्

लेखकः— वि. एस्. रङ्गनाथाचार्यः, १७/१, जानकीरामपिळ्ळै वीथी, पश्चिम-माम्बलम्, मद्रास् ३३

नेदं वाचोयुक्तिरूपेणोक्तम्; स्वगुणैरावर्जितजनस्य तपस्विजनरक्षार्थ-मरण्यं गतवतः, जनवाक्येन देवीपरित्यागमपि सोढवतः, मर्त्यशिक्षणार्थं गृहीतावतारस्य श्रीरामचन्द्रस्य राज्यं फलेन जनतन्त्रराज्यमेवेति उपन्यस्तमत्र । —वे. रा.

### आपाशास्त्री-साहित्यसमीक्षा

निबन्धकः—अशोकः अकलूजकरः, फर्गुसन् महाविद्यालयः, पुण्यपत्तनम् ४. शारदापत्रिकायाः विशिष्टग्रन्थमाला ।

आधुनिकसंस्कृतप्रणयी को वा न जानाति श्रीमन्तं राशिवडेकर-आपाशास्त्रिमहोदयम्, येन संस्कृतचन्द्रिका-सूनृतवाणीपत्रिकाद्वारा बहुमुखं बहुगुणं नूतनं संस्कृतवाङ्मयमसृज्यत, गद्यं, पद्यम्, अनुवादाः, चर्चाः, लेखाः, आधुनिकविज्ञानविषयोपन्यासाश्च । विवृता च लेखेषु सरलसुभगा संस्कृतशैली । तेषां संस्कृतवरिवस्यामधिकृत्य प्रवृत्तोऽयं निबन्धः, आयुष्मता अशोक-अकलूजकरेण लिखितः । लेखकोऽयं, तदीयगद्यबन्धगुणश्च प्रतिभा-स्मच्छैरनुभूतचर एव । समीक्षात्मकं कार्यमस्मिन् पुस्तके सम्यङ् निर्वर्तितम् ।

—वे. रा.

### मलमासनिर्णयः सटिप्पणः

कर्ता-श्रीदरबारी झा । प्रकाशिका-श्रीमती कमलादेवीजी व्यास, बेतिया. हिन्दुस्तान् प्रकाशन् बेतिया, चम्पारण्, बिहार् । रू. २.५०

ग्रन्थस्यास्य प्रणेता ज्योतिषे साहित्ये च निष्णातः, संस्कृतोच्च-विद्यालयाचार्यः । ज्योतिषेऽनेन पूर्वं प्रकाशिता ग्रन्थाः गोलपरिभाषा ज्याक्षेत्र-विचारसहिता, लघुचन्द्रिकोत्तरार्धम्, प्रश्नभूषणं च । अप्रकाशिताश्चान्ये त्रयो ग्रन्थाः सन्ति । प्रकृतग्रन्थस्य विषयः क्षयमासाधिकमासयोः क्लेशबहुलो गणना-प्रकारः, यन्निर्णयाधीनं श्राद्धव्रताद्यनुष्ठानं भवति । अत्र बहूनां पूर्वाचार्याणां निबन्धकर्तॄणां स्मृतिव्याख्यातॄणां च मतान्यालोड्य क्वचित् खण्डयित्वा स्वमतं स्थापितं ग्रन्थकृता । सौरचान्द्रभेदेन मानं, माससंज्ञायां मानं, अधिमासक्षयमासयोर्लक्षणं, साधनं च, तत्प्रयुक्तश्राद्धव्रताद्यनुष्ठानमित्येते विषया अत्र प्रमाणपुरस्सरं विचारिताः ।

—वे. रा.

### विचारत्रयी

श्रीसोमसुन्दरदीक्षितः, नूरणिग्रामः, पाल्घाट्, केरलम् ।

अत्र प्रथमो विचारः मन्त्रप्रश्ने क्वचित्पाठभेदं परामृशति । 'सखा सप्तपदा भव' इत्यादौ वैवाहिके मन्त्रे 'सखायौ बभूव', 'सखायौ अभूव' इति पाठभेदौ संप्रदायतः व्याकरणतश्च परीक्षितौ; प्रसङ्गात्स्थलान्तरेषु मन्त्रेषु दृश्यमानाः पाठभेदाश्चोदाहृताः । द्वितीयो विचारः तैत्तिरीयब्राह्मणे

सायनभाष्ये स्थलमेकं परीक्षते । तथा तृतीयश्च अच्छिद्रकाण्डे स्थलमेकम् । अनयोर्विचारयोः श्रीदीक्षितानां श्रौते या प्रतिष्ठा सा विशदीभवति ।

—वे. रा.

सूत्रार्थः

पि. एस्. सुब्बरामभट्टः, गीतामुद्रणालयः, त्रिशूर्, केरलम् ।

श्रीसुब्बरामभट्टानां गद्यलेखाः प्रतिभायामनेकशः प्रकाशिताः । तेषां संस्कारशुद्धा शैली तत्र स्पष्टैव । अस्मिन् लघुनि क्रोडपत्रप्राये स्वव्याकरण-वैदुषीं विवृण्वानैरेतैः 'लः कर्मणि च भावे चाकर्मकेभ्यः', इतीदं सूत्रं सोदाहरणं प्रामाणिकव्याख्यातृमतोदाहरणपूर्वमत्र खण्डत्रयेण विचारितम् ।

—वे. रा.

सुसंहतभारतम्

लेखकः—पुल्लेल रामचन्द्रुडु, आर्ट्स्-सैन्स् कालेज्, वरङ्गल्, आन्ध्रप्रदेशः । प्रकाशिका-संस्कृतपरिषद्, विश्वविद्यालयः, सागर्, म. प्र.

समीचीनतया सन्दृब्धमिदं नाटकं प्रमोदमावहति । भारतस्य स्वातन्त्र्य-प्राप्त्यर्थमुद्यमः, तत्प्राप्तिः, देशस्य विभागः, नेहरूमहाशयं पुरस्कृत्य स्वतन्त्र-भारतशासनसंविधानं, पाकिस्तानोदयानन्तरं तत्रत्यहिन्दुसमुदायेनानुभूताः क्लेशाः इत्यादि चरित्रमा-'गोवा'-वृत्तान्तमत्र रूपकस्य वस्तुत्वेन उपात्तम् । चर्चिल्, आङ्ग्लेयराज्यप्रतिनिधिः, देशीयराजप्रतिनिधिभूतौ द्वौ-एको हिन्दुराजः, अन्यो मुस्लींराजः, यौ स्वातन्त्र्यादनन्तरं राज्यपालस्थानं प्रापितौ, गान्धी, सुभास्बोस्, नेहरू, अन्ते डा० राधाकृष्णन् इत्येतेऽत्र पात्रीकृताः । अधः तत्तद्वृत्तान्तप्रमाणत्वेन चारित्रका विषयाः तत्तद्ग्रन्थेभ्यः आङ्ग्लवाक्यै-रुदाहृताः । भूतपूर्वमहाराज-नवाब्व्यक्त्योश्चित्रणे हास्यरसोऽपि योजितः । गर्भाङ्कप्रक्रिया च सुष्ठु स्वीकृता । भारतस्य सुसंहतत्वसंपादनं, पञ्चशीलोद्घोषः इदमुभयं फलत्वेन निर्वहणसन्धौ सूत्रितं रूपकस्य अनुस्यूतां विशिष्टां गतिं देशभक्तानां सहृदयानां पुरत उपस्थापयति । अन्ते गर्भाङ्के महाराज-अशोकस्य प्रवेशः, कलिङ्गयुद्धव्यतिकरेण तदाघोषितः समरसन्न्यासः, वर्ण-भाषा-मतभेदभिन्नजनताः प्रति सामरस्यभावना, नेहरू-राधाकृष्णाभ्यां तदामोदनं च रूपकस्य किमपि परिणामरमणीयत्वमापादयन्ति । सर्वथा प्रशंसार्होऽयं रामचन्द्रार्यस्य परिश्रमः, आशास्महे रङ्गे प्रयुज्य रूपकस्यास्य साफल्यं संपादयिष्यति कविरिति ।

—वे. रा.

## मुकुन्दकोषः-लिङ्गानुशासनवर्गः ।

प्रणेता मुकुन्दशर्मा । प्राप्तिस्थानम्ः मुकुन्दशर्मा, मुकुन्दाश्रमः, ज्योतिस्तत्त्वकार्यालयः, पोस्ट् औफीस् अमोल्, गढ़वाल्, उ. प्र. । मू. रू. १२.

अस्य समग्रस्य ग्रन्थस्य मुकुन्दकोष इति नाम । तत्र च पञ्चोत्तर-शताधिकसमभागोऽयम् । संस्कृतभाषायां स्त्रीलिङ्ग-पुंलिङ्ग-नपुंसकलिङ्गभेदात् त्रीण्येव लिङ्गानि । तेषु अवान्तरविभागस्य विद्यमानत्वात् तान्येव अष्टधा विभक्तानि । पुं, स्त्री, नपुंसक, पुंस्त्री, पुन्नपुंसक, स्त्रीनपुंसक, त्रि, अभिधेयवत्-लिङ्गानि इति क्रमेण । तत्र पुंलिङ्गे प्राचीनैः अमरसिंह-यादवादिभिः प्रदर्शितया रीत्या तेषामेव श्लोकान् प्रदर्श्य विपुलां च व्याख्यां निर्माय तत्सारसङ्ग्रहभूतं स्वकीयं पद्यं संख्याङ्कितं च कृत्वा तस्यापि व्याख्यां विपुलां निर्माय एवं रीत्या निर्व्यूढोऽयं ग्रन्थः । तत्रतत्रावश्यकस्थले टिप्पणी च संयोजिता । अत्र च पुंलिङ्गानुशासने (१७) सप्तदश श्लोकाः स्त्रीलिङ्गानुशासने (३३) त्रयस्त्रिंशच्छ्लोकाः । नपुंसकलिङ्गानुशासने (२४) चतुर्विंशतिश्लोकाः । पुंस्त्रीलिङ्गानुशासने (१२) द्वादश श्लोकाः । पुन्नपुंसकलिङ्गानुशासने (३६) षट्त्रिंशच्छ्लोकाः । स्त्रीनपुंमकलिङ्गानुशासने (६) षट् श्लोकाः । त्रिलिङ्गानुशासने (६) षट् श्लोकाः । अभिधेयवल्लिङ्गानुशासने (१) एकः । एवं रीत्या परिष्कृतेऽपि लिङ्गानुसनपरिशिष्टमिति यादवादीनां श्लोकानुदाहृत्य सव्याख्यं स्वीयं च पद्यत्रयं निर्माय अन्ते श्लोकद्वयेन स्वग्राम-नामादिग्रन्थावतरणकालनिर्देशपूर्वकं ग्रन्थोपसंहारश्च कृतः । अत्र उद्धृतानां प्राचीनग्रन्थानां नाम-प्रकाशनस्थानादिनिर्देशपूर्वकं सूचीपत्रमपि दत्तम् । एवं विस्तृत्य कृतलिङ्गनिर्देशानां पदानां कस्य पदस्य किं लिङ्गमिति गवेषणे संप्रवृत्ते तत्सौकर्यापादनार्थम् अकारादिक्रमेण सर्वेषामपि पदानाम् अनुक्रमणिका च संकलिता मुद्रिता च । एवं टिप्पणीस्थशब्दानामपि अनुक्रमणिका संयोजिता । मुद्रणसमये प्रमादादिना आपतितानां दोषाणां समीकरणार्थं शुद्धिपत्रं चायोजितम् ।

इदंपुस्तकमुद्रणं राजकीयपदाधिकृतानां बहूनां महाशयानाम् अन्येषां च संमाननेन राजकीयद्रव्यसाहाय्येन च निर्व्यूढमिति ग्रन्थकर्तुरेव कृतज्ञता-प्रदर्शनेन परिज्ञायते । अस्य भागस्यान्यतमत्वात् इतः पूर्वं परं च विद्यमानाः

षडधिकशतसंख्याका भागा अपि क्रमेण तेषामेव महाशयानां प्रोत्साहनेन राजकीयद्रव्यसाहाय्येन च मुद्रिताः प्रकाशिताश्च भूयासुरिति पण्डितलोकस्य सर्वस्याप्याशंसा । —अ. मु. श्री.

## सन्ध्या

लघुप्रेक्षणकम् । अनुवादकः—श्रीकृष्णशर्मा । मूलग्रन्थस्य कर्ता-'जि' शङ्करकुरुप् 'भद्रालयम्', एरणाकुलम् -१, केरलम् । १९६५. रू. १.

तिरुपति-श्रीवेङ्कटेश्वरविश्वविद्यालये संस्कृताध्यक्षपदमधिष्ठितेन श्रीकृष्णशर्मणा केरलभाषातः संस्कृतभाषयानूदितमिदं लघुप्रेक्षणकं नैसर्गिकप्रतिभाविलासेन रसभावपरिस्फूर्त्या च सहृदयहृदयं सम्यगाह्लादयति । अस्य मूलग्रन्थस्य रचयिता 'वर्तमानकेरलभाषाकविष्वग्रगण्यः श्रीशङ्करकुरुप्-नामा महाकविः, यः 'जि' इत्येकाक्षरेण केरलेषु सुविदितः, यस्य च विश्वदर्शनाभिधानः काव्यसमाहारः १९६३ तमे वर्षे साहित्य-अकादमीद्वारा भारतराष्ट्रपतेः बहुमानमुद्रायाः पात्रमभूत् । दुःखपर्यवसायिनि त्रिदृश्यकेऽत्र प्रेक्षणके नूतनां 'सिंबालिक्'-रीतिमाश्रित्य प्रकृतिप्रतिभासवर्णनद्वारा अहल्याशापकथा सूचिता व्याख्याता च । सर्गकर्तुरजस्य संकल्पनन्दिनी विश्वसौन्दर्यदेवता 'अनुरागवती सन्ध्या'त्र नायिका, या पित्रोग्रतेजसो दिवसस्य सहधर्मचारिणीपदं ग्राहिता । रजःप्रकृतिराकाशस्तस्याः कामुकः । तस्य दूती च तारका ।

"अधर्म्या निर्यन्त्रणा च भोगलालसा उपभोक्तुर्वैरूप्ये अनन्तदुःखे च पर्यवस्यति । इदमेव तत्त्वं रजःप्रकृतेः कामुकस्याकाशस्य तेन प्रसारिते कामपाशे सहजया भोगवासनया स्वयमुपनिबद्धायाः सन्ध्यायाश्च तमःप्राप्तिरूपपरिणामः प्रख्यापयति ।"

यद्यप्यनुवादग्रन्थोऽयं, तथापि स्वतन्त्रग्रन्थ इव निसर्गसुन्दरेण शैलीविशेषेण भावुकहृदयसंवादभाग्भवति । —के. कु. रा.

## कृदन्तरूपमाला

मद्रपुरी-संस्कृतविद्यासमितेः उच्चशास्त्राध्यापनकक्ष्यायां प्रधानाध्यापकैः पण्डितवर्यैः श्रीमद्भिः श. रामसुब्रह्मण्यशास्त्रिभिः सन्दृब्धा । प्रथमो भागः । प्रकाशकः—श्री ति. वे. विश्वनाथार्यः, १४ पूर्वमाडवीथी, मद्रास्-४. मूल्यम् . रू. १०.

गाढावगाढव्याकरणानामपि विदुषां संस्कृतभाषया व्यवहारकाले यथेष्टं कृदन्तप्रयोगस्थलेषु क्लेशः संशयश्च अनुभवसिद्धावेव । अतः ईदृशौ क्लेशसंशयावपाकर्तुम् अनायासेन बोद्धुं प्रयोगानुगुणपरिपाट्या कृदन्तपदानाम् एकः कोशोऽवश्यं सज्जीकरणीय इति निर्धार्य मद्रपुरीयसंस्कृतविद्यासमित्या महता प्रयत्नेन इयं रूपमाला सज्जीकृत्य मुद्रयित्वा प्रकाशिता ।

कोशेऽस्मिन् प्रायः २००० धातवो विचारयिष्यन्ते । अस्मिन् प्रथमभागे २५० धातवो विचारिताः । अत्र प्रथमं धातवः ससंख्यं सगणं सेट्त्वानिट्त्वादिविशेषैः, सार्थं च निर्दिष्टाः । अर्थविषये प्रमाणश्लोकाश्च दैवाख्याद् ग्रन्थादुदाहृताः । ततः परं ण्वुल्, तृच् (तृन्), शतृ, शानच् इति क्रमेण त्रिंशत्प्रत्ययान्तानि रूपाणि दत्तानि । अपेक्षितस्थलेषु भट्टिकाव्य-धातुकाव्यादिभ्यः समर्थकान्युदाहरणानि च योजितानि । दृष्टिमात्रेण व्युत्पन्नानां व्युत्पित्सूनामन्येषां सर्वेषामेव कृदन्तज्ञानलाघवं यथा संपद्येत, तथा संपादितोऽयं कोशः ।

पुस्तकं चेदं डा० सि. पि. रामस्वाम्यार्याणां डा. वे. राघवार्याणां चामुखाभ्यां भूषितम् । संपादकाः प्रकाशकाश्च महान्तं धन्यवादमर्हन्ति । समग्रस्य पञ्चभागात्मकस्य कृदन्तकोशस्यास्य प्राक्प्रकाशनमूल्यं रू. ५० ; प्रतिभागं रू. १० । —अ. मु. श्री.

## द्युतिश्रुतिग्राहिनी

कर्ता—श्रीराधाकृष्ण मुदलियार्, कर्णाटकविश्वविद्यालयः, धार्वार् । उषाप्रकाशन्, धारवाट, मैसूर् रू. ८.

कर्ता चतुर्षु विद्यास्थानेषु एम्. ए. परीक्षा उत्तीर्णः । पुस्तकेऽत्र स्वस्य अष्टादशभाषापरिचयं प्रदर्शयन् तासु भाषासु स्वकृतानि पद्यानि प्रकाशितवान् । उपक्रमे संस्कृतभाषायां पद्याष्टकं दत्तम् । आमुखे भारतीयानां भाषाणां प्रत्येकं चरित्रं वैशिष्ट्यं च संक्षेपेण वर्णितम् । यत् सर्वभाषामयानि कवित्वानि इमानि हिन्द्या आङ्ग्लभाषया चानूदितानि तत् मितंपचवाचकं वाचकानां साह्याय भवेत् । —वे. रा.

## सांमनस्यम्

संपादकः—प्रा. ऋषिराज अग्निहोत्री से. नं. १९ ३९/५, अहमदाबाद्-१.

इदं बृहद्गुजरात-संस्कृत-परिषदः संस्कृतपत्रिका नूतनतया उपक्रान्ता। अत्र प्रथमसञ्चिकायां गद्यबन्धाः, कविताः, लघुरूपकम्, विचारात्मका लेखाः, सचित्रं संस्कृतवृत्तान्तजातम्, इत्यादिकं विविधं वस्तुप्रकाशितम्। स्वागतं ब्रूमो नवोद्गतायास्सोदर्याः, ब्रूमश्च 'वर्धस्व, चिरं जीव' इत्याशिषः।

—वे. रा.

## देवभाषा

कर्ता—नारायण कृष्ण सेन गुप्त। प्राप्तिस्थानम्: दास् गुप्त, ५४/३ कालेज् स्ट्रीट्, कल्कत्त—२०. १९६४. रू—१. २५.

कविराज रखल्दास काव्यतीर्थेन रचितस्य वंगभाषाग्रन्थस्य आङ्ग्लानुवादोऽयं ग्रन्थः। अत्र लघुभिः पदगुम्फैः षट्त्रिंशता पाठकदम्बकेन संस्कृतभाषाप्रवेशः सिषाधयिषितः। प्रयत्नोऽभिनन्द्यः। किन्तु बहुधा मुद्रणादिप्रमादकलुषितोऽयं ग्रन्थः परिशोध्य पुनर्मुद्रित एवोपयोगमर्हति।

## कण्टकाञ्जलिः

रचयिता-'कण्टकार्जुनः' (के. एम्. अर्जुनवाडकर)। प्राप्तिस्थानम्: क. अ. मंगरूळकरः, अश्वत्थसाहितो, 'पामीर', २०५७, सदाशिव पेठ, टिलक् रोड्, पुणें ९. रू. ५.

उपहासगर्भाः श्लोकाः बहुविषयस्पर्शिनः अत्र गुम्फिताः, आङ्ग्ल-संस्कृत-महाराष्ट्रविवरणैः सह। एषे श्लोकेषु कर्तुः न केवलं पचेलिमा संस्कृतशैली, अपि तु विडम्बनपरिहासयोः शेमुषी च व्यज्यते। रामराज्याख्यायां प्रथमपद्धतौ अद्यत्वे उपलभ्यमानस्य शासनक्रमस्य, शासितॄणां मन्त्रिणां शासकसभाङ्गभूतानां च स्वभाववैचित्र्यं व्यवहारकूटता च कवेः शरव्यतां प्रापिते। पञ्चशीलनीतिः, देशान्तराणां राज्यतन्त्रव्यवहाराः, चीनपाकिस्तानयोश्चेष्टा, जीवयात्रा, छात्रणां प्रवृत्तयः, किञ्च यो योऽद्यतनीयो व्यतिकरः, सर्वमिदं सधैर्यं सचमत्कारं चात्र विडाम्बनाशूले समारोपितम्।

प्राचीनाः प्रसिद्धाः श्लोका विपरिवर्तिताः कर्तुः चातुर्यं प्रकाशयन्ति। 'कण्टककाथः', 'अस्माकं राष्ट्रियम्', 'स्वराज्यम्', 'आयव्ययौ', 'चन्द्रस्य कालिमा', 'गुण्डस्य कस्माद् भयम्', 'चलचित्रम्', 'धनब्रह्म', 'प्रशासनकृपा', 'संस्कृताध्येतुराकांक्षा', 'छात्रायणम्', 'विद्यार्थिरामायणम्', 'गार्हस्थ्योपनिषद्', 'चतुर्दश रत्नानि', 'गुरुलाघवम्', 'श्रद्धा', 'देवस्य शुल्कश्रेणी', 'सर्वं शून्यम्', 'ओंशान्तिः' इत्येते श्लोकाः चित्तावर्जकाः। सन्ति कानिचन पद्यानि यत्र वक्रता वा नास्ति, क्लेशो वा भाति, स्फुरति मनाक् वैरस्यं च। मध्येसंस्कृतं सुबहूनामाङ्ग्लशब्दानां च यथावदुपयोगश्च न प्रशस्तः। परन्तु भूयसा कौशलशालिन एव श्लोकाः। यात्र नूतना परिहाससरणिरुन्मीलिता तत्र प्रगल्भमानेन कविनानेन 'पाण्डित्यप्रकाशः', 'चुक्रनीतिः' इत्यन्ये विडम्बन-प्रबन्धा रचिताः शीघ्रमेव प्रकाशमेष्यन्तीति प्रतीक्षामहे।

पुस्तकस्यास्य मुद्रणमतीव समीचीनं; चित्राणां योजनं गुणमुत्कर्षयति।

—वे. रा.

**Our Contributors :**

अस्यां सञ्चिकायां नूतनतया दृश्यमाना लेखकाः—

Madhava Deshpande, Student, 562, Budhwar, Poona-2.

माधव देशपाण्डे, विद्यार्थी, ५६२, बुधवार्, पूर्णे-२.

Siva Prasad Bharadvaj 'Sastri', M.A., MO.L., Sadhu Asram, Hoshiarpur, Punjab.

शिवप्रसाद भारद्वाजः, शास्त्री, एम्. ए., एम्. ओ. एल्., साधु-आश्रमः, होशियार्पूर्, पञ्चनदप्रदेशः.

Rama Kailas Pandey, M.A. Research Scholar, Sanskrit Dept., University of Allahabad, Allhahabad, U. P.

रामकैलासपाण्डेयः, एम्. ए., विमर्शविद्यार्थी, संस्कृतविभागः, प्रयागविश्वविद्यालयः, प्रयागः ।

D. D. Bahulikar, House No. 32, 'C'-Ward, Lonovla, Maharashtra.

दि. द. बहुलीकरः, ३२-'सि'-वार्ड्, लोनवला, महाराष्ट्रप्रदेशः.

Vidyullekha Vadh, Student, Sanskrit Dept., University of Poona.

श्रीमती विद्युल्लेखा वाध, विद्यार्थिनी, संस्कृतविभागः, विश्वविद्यालयः, पूर्णे.

Hari Ramachandra Diwekar, M.A., D. LITT., Sahityacharya, Jinsiwale's Wada, Huzrat, Laskar Gwalior.

हरि रामचन्द्र दिवेकरः, एम. ए., डि. लिट्., साहित्याचार्यः, जिन्सिवाल वाड, हुसूरत्, लस्कर ग्वालियर्.

T. G. Siddhapparadhya, Reader in Sanskrit, University of Mysore, Mysore.

टि. जि. सिद्धप्पाराध्यः, संस्कृतविभागः, मैसूर्-विश्वविद्यालयः, मैसूर्.

Chandrasekhara Ramachandra Tambe, 56, Nanaghat, Mandla, M. P.

चन्द्रशेखर रामचन्द्र ताम्बे, ५६, नानाघाट्, मण्डला, मध्यप्रदेशः.

L. J. Khare, Retd. Pleader, 199, Gokul Peth, Nagpur, M. P

एल्. जे. खरे, १९९, गोकुलपेठ्, नागपुरम्, मध्यप्रदेशः ।

# "संस्कृतप्रतिभा"

## अभिनन्दनानि

विद्यारत्न श्रीसातकड़ि मुखोपाध्यायः, काव्यव्याकरणतीर्थः, न्यायमीमांसा-वेदान्त-व्याकरणाचार्यः—

"साहित्य-अकादमीसंस्थया प्राकाश्यं प्रापितायाः संस्कृत-प्रतिभाया अवलोकनात् परिज्ञायते यत् तदीयां संपादनधुरां भवन्त एव समुद्वहन्ति ।....संस्कृतप्रतिभाया अद्ययावत् प्रकाशितानां विलासानां दर्शनाद् भवदीयं संपादननैपुण्यं रचनाचातुर्यं गैर्वाण्यां वाण्यामनुरागातिरेकं च सम्यग् विदित्वा परमानन्दसन्दोहमावहतेऽस्मदीयं चेतः ।......तत्र संकलिता इदानींतनैर्निबन्धृभिर्निर्मिताः काव्यनाटकादिनिबन्धाः....भवदीय-संपादकीयप्रबन्धाः काव्यानुवादादयोऽपि अवधानेन परिशीलिताः। महत्खल्विदमाशास्थानं भग्नोद्यमानां संस्कृतप्रणयिनां यत्पूर्व-सूरिभिर्न्यस्तोऽमूल्यो निधिरद्यापि अविच्छिन्नसन्तानेन परिपाल्यते। अन्यच्च सुमहत् प्रशस्यं कर्म भवद्भिः क्रियमाणं पश्यामो यत् 'निकषोपले' नवीनसंस्कृतकृतीनां परीक्षणं नाम । तस्मात् वर्तमानसुरभारतीसेवकानां परिचयान् कृतीश्च वेदितुमलं भवेम ।....

'YUGANTAR' Calcutta:

"This Sanskrit Literary Magazine published by the Sahitya Akademi is rich with contributions from distinguished writers."